॥ श्रीमत्पण्डितप्रीतिविमलगणिविरचिता ॥

# ॥ श्रीचंपकश्रेष्ठिकथा ॥

श्रीमत्पंन्यासश्रीमच्चारित्रविमलगणिपादाम्भोजचंचरीक-

पंन्यासमुक्तिविमलगणिसंशोधिता ॥

श्रीमदणहिल्लपुरपत्तनस्थ फतासाख्यपाटकवास्तव्यो जमनचंद्रात्मजगिरधरचंद्रश्रेष्ठिवरेण

महाशयेन नरकार्गवाडीकरलल्लुचन्द्रात्मजप्रेमचंद्रश्रेष्ठिमहाशयेन च

मुद्रयित्वा प्रकाशिता.

चुडीओळ—राजनगरे.
श्री रत्नसागरप्रीन्टींगमुद्रणालये मुद्रापितं. नं २७४३
शा. जयसिंहभाइपुत्रामृतलालेन मुद्रितम्. ।
वीरनिर्वाणसंवत् २४४२ विक्रमसंवत् १९७२
प्रत ५०० आवृत्ति १ ली.
किम्मत अमूल्य.

# ॥ प्रस्तावना ॥

इह हि श्रीचम्पकश्रेष्ठिचरित्ररचनाचातुर्यांचिताः श्रीप्रीतिविमलगणयः कदा कतमं भूखण्डकं मंडयामासुरित्या-शंकायामस्यैव चम्पकश्रेष्ठिकथानकस्य प्रान्तभागविलोकनाद्ग्रंथनिर्माणसमयस्तु.

आम्रस्थलचातुर्मास्यि मध्यस्थप्रीतिविमलेन । शशिरसबाणाग्न्यब्दे (१६५३) विहिताः श्लोकाश्चरित्रस्य ॥ १ ॥

इत्येवं विक्रमाक्रान्तनिष्टपाद्विक्रमादित्यभूपालात्रिपंचाशदधिकषोडशशततमे वर्षे निश्चीयते, तथैतेषां प्रीतिविमल-गणीनां गुरुप्रशस्तिरेवं श्रीमत्तपागणगगनांगणगगनमणिभट्टारकश्रीआनन्दविमलसूरीश्वराः षट्पंचाशत्तमपट्टधरा विमलशा-खाशाखिनश्च सञ्जातास्तेषां स्वहस्तदीक्षिताः शिष्यधुर्यास्तु श्रीधर्मसिंहगणयः श्रीऋषविमला इत्यपराभिधानधारिणः ।

॥ यदुक्तं श्रीमज्जयविमलगणिभिः स्वकृतप्राकृतसाधुवन्दनायां ॥

श्रीआणंदविमलसूरीश्वर–हस्तदीक्षितगुणधामजी । हर्षविमलपंडितवैरागी धर्मसिंहघरे नामजी ॥ १ ॥

नाससीसजयविमलअनोपम–गणिवरगुणमणिदरियोजी । कीर्तिविमलकवि तेहनो जाणो ज्ञानचरित्रजलभरियोजी॥२॥

॥ तथैव प्रकृतकशास्त्रकारैरपि प्रकटमेव प्रतिपादितं ॥

तत्पादपरिमल–सेवी श्रीधर्मसिंहगणिनामा । तत्पादपंकजसेवी जयविमलगणिर्गणे जीयात् ॥ १ ॥

इत्यादि यत्तु चम्पकश्रेष्ठीकथाप्रान्ते श्रीआनन्दविमलसूरीश्वरचरणारविन्दचञ्चरीकायमाणश्रीविजयदानसूरीश्वर-

पट्टालंकाराणां विद्वद्धिरकोटीरहीराणां श्रीहीरविजयसूरीश्वराणां तत्पट्टधरधुर्याणां विजितकृपाक्षिकपरीषहसेनानां श्री...

द्विजयसेनसूरीणां च नामनी सूचिते तत्तु तद्राज्येऽस्याः कथायाः कृतत्वादिति सामान्यसाम्येऽप्याचार्यचरणरोचित्वमप्र...

क्रमेवाऽस्त्यतो न कोऽपि शंकावकाशः ॥

तथैवात्यन्तरसिके चम्पकश्रेष्ठिकथानके सकललोकोपयोगित्वाच्च प्रसंगतो भवितव्यताया उपरि रावणकथा...

न्तर्गतरत्नसेनचंद्राननतोकथानकं तथोत्तमे बुद्धौ च सुबुद्धिमंत्रिकथा तत्र वने सिंहो मदोन्मत्तः शशकेन निपातित इत्य...

तथा वानरसिंहवगोत्रिआ एकलडे शीयाल इति तथा बुद्धिहीना विनश्यंति यथा ते सिंहकारका इसत्र व्याख्यायां अ...

क्रमेण बुद्धौ शशकसृगालकमलाधरविप्रकथानकान्यपि स्थापितानि चास्याः कथायाः संशोधनसमये पुस्तकयुगलमुपलब्ध...

तत्रैकं राजनगरस्थितश्रीमत्पंन्यासदयाविमलगणिज्ञानकोशस्थं द्वितीयं च श्रीमदणहिलपुरपत्तनस्थभाभाभिधपाटकस्थित...

श्रीहीरविमलमुनिवर्यचित्कोशस्थमिति पुस्तकद्वयानुसारेण शोधिते मुद्रिते चास्मिन् ग्रंथे दृष्टिदोषात् सीसकाक्षरयोजना...

दोषाद्वा क्वचनाशुद्धिः स्थिता जाता वा तां कृपां कृत्वा सहृदयहृदयाः शोधयिष्यन्तीति यदुक्तं

गच्छतः स्खलनं क्वापि भवत्येव प्रमादतः । हसन्ति दुर्जनास्तत्र समादधति सज्जनाः ॥ १ ॥ इति ॥

विज्ञापयति

श्रीमत्पंन्याससौभाग्यविमलगणिपादारविन्दचञ्चरीकायमाणः

पंन्यासमुक्तिविमलगणिः

॥ श्रीमत्पण्डितप्रीतिविमलगणिविरचिता ॥

# ॥ श्रीचम्पकश्रेष्ठिकथा ॥

श्रेयःसंततिकर्त्तारं हर्त्तारं सकलापदाम् । नत्वा वीरजिनं वक्ष्ये चम्पके१भ्यकथानकम् ॥ १ ॥

अभयं सुपत्तदाणं अणुकंपा उच्चियकित्तिदाणाइं । दुण्ह वि मुक्खो भणिओ तिण्हि वि भोगाइअं दिंति ॥ २ ॥

सत्त्वानां करुणादाना-ल्लक्ष्मीः सम्पद्यते सदा । २पोटायाः कुक्षिसम्भूत-श्रेष्ठिचम्पकवद्द्रुतम् ॥ ३ ॥

अस्त्यत्र भरतक्षेत्रे पुरी पूरिव वज्रिणः । चम्पानामेति विख्याता ख्यातो यत्र सुखी जनः ॥ ४ ॥

---

१ इभ्यः श्रेष्ठी ।    २ पोटाया दास्याः

धनिनो धर्मसंयुक्ता विमुक्ता वृजिनान्नराः । नित्यं कल्पद्रुमायन्ते पृथिव्यां दानशीलतः ॥ ५ ॥
अर्हणा अर्हदंह्रीणां क्षिपन्ति कालकर्णिकाम् । कुर्वन्तो मानवा यत्र क्लेशक्षेत्राग्निकाङ्क्षिणः॥६॥
प्रौढप्रासादपङ्क्तीनां भान्ति भास्वद्गृहालयः । चंचलत्केतुभिर्यत्र सुगन्धाश्रितवायुभिः ॥ ७ ॥
तत्र सीमन्तपालोऽभूद्राजा राजकुले महान् । सौभाग्यादिगुणैर्गीतं विश्वे यस्य यशो बलम् ॥८॥

यतः,

यस्मिन्महीं शासति वाणिजानां निद्राविहारार्धपथे गतानाम् । वातोऽपि नास्रंसयदंशुकानि
को लम्भयेदाभरणाय हस्तम् ॥ ९ ॥
तस्यापि छत्रछायायां वसन्तोऽन्या जना घनाः । तेषां मध्ये वृद्धदत्तो वसति व्यवहारिकः ॥ १० ॥
तस्य गृहे सुवर्णानां स्युष्षण्णवतिकोटयः । तथापि बद्धमुष्टिस्स दानं दत्ते न कर्हिचित् ॥ ११ ॥
पूज्यन्तेऽहर्निशं तेन भक्त्या ताः स्वर्णकोटयः । नैवेद्यपुष्पधूपाद्यै-रभीष्टदेवता इव ॥ १२ ॥

व्यापारं दंतलोहाद्यं स करोति दयां विना । देवपूजागुरूपास्ति-धर्मकर्मादिवर्जितः ॥ १३ ॥
निःस्नेहं भोजनं भुङ्क्ते न स्वपेद्धूरमञ्चके । वर्य्यवस्त्रं विनैवं स निजं जन्माविडम्बयत् ॥ १४ ॥

यतः,

मा धनानि कृपणः खलु जीवन् तृष्णयार्प्पयतु जातु परस्मै । तत्र चैष कुरुते मम चित्रं यत्तु नार्प्पयति तानि मृतोऽपि ॥ १५ ॥

अन्यच्च,

कृपणकेरीकूल्हड्डइ सरणइ पइट्ठुउ दम्म । मत्तवीहइरे बप्पडा नही काढुं आजम्म ॥ १६ ॥
अन्यदा पश्चिमे यामे नाप्तो रतिं स्वचेतसि । शब्दमेकं नभोभूतं शुश्रावेत्यात्मकर्णयोः ॥ १७ ॥
समुद्भूतोऽस्य पश्चाया भोक्ता कीनाशधर्मिणः । एवं द्वितीयतृतीय-रात्रौ सुश्राव निक[1]णम् ॥१८॥

---

१ निक्वणं शब्दम्.

असंज्ञाव्यं वचः श्रुत्वा श्रेष्ठी हृदीत्यचिन्तयत्। मम पुत्रस्य को ज्ञावी ज्नोक्ताऽकस्माद्धनस्य रे॥१९

पृछाम्यहं निजां गोत्र–देवीं परम्परागताम्। मद्भार्याया ज्ञवेत्कुक्षाऽवन्यस्या वा ज्ञवेत्पुनः॥२०॥

पूजयित्वा ततो देवीं विधाय कुशसंस्तरम्। स्वपिति तत्पुरो नित्यं कृतोपवास एव हि ॥ २१ ॥

यतः,

पंचसु जिणकल्लाणेसु तहेव महरिसितवाणुन्नावाउ। जम्मंतरनेहेण य आगछंति सुरा इह यं॥२२

सप्तमे दिवसे जाते प्रादुर्जूता ततः सुरी। प्रोवाच हे व्यवहारिन् किं कार्यं ते मया सह ॥ २३॥

श्रेष्ठी प्रोवाच ज्नो ज्नद्रे वद त्वं कुलदेवते। असत्या किमु सत्या वा या [1]वाणी व्योमसम्नवा ॥२४॥

देवी प्रोवाच ज्नो ज्नद्र सा वाणी नान्यथा ज्नवेत्। त्वद्भार्याया ज्नवेन्नैव पुनः कुदयवतारकः॥२५॥

अनिष्टं वज्रपाताज्नं प्राणिनां प्राणघातकम्। एवं सुरीवचः श्रुत्वा पपात धरणीतले ॥ २६ ॥

---

[1] वाणीशब्दो दीर्घोपि.

हाहाकारेति सञ्जाते श्रेष्ठी मूर्छितमानसः। क्षणं सञ्जातचैतन्यः पुनः प्रोवाच तां प्रति ॥ २७ ॥
यद्भाव्यं तद्भवत्येव नान्यथा भवितव्यता। तर्हि त्वं वद मां तस्या–ऽवतारः कुत्रचिद्भवेत् ॥२८॥
देव्याह शृणु भोः श्रेष्ठिन् पुरे कांपिल्यकाभिधे। तत्र स्फुटं वसत्येव श्रेष्ठी त्रिविक्रमाभिधः॥२९॥
दासी पुष्पवती तस्य तस्याः कुक्ष्यवतारकः। शुभभोक्ता च ते भावी-त्युक्त्वा सापि तिरोदधे॥३०॥
अथ प्रभाते सञ्जाते श्रेष्ठी पारणकं व्यधात्। लघुभ्रात्रा साधुदत्त–नाम्ना सहाविचारयत् ॥३१॥
तेनाऽथ साधुदत्तेन ज्ञातो वृत्तान्त एव सः। भ्रातरं प्राह भो भ्रातः नान्यथा देवतावचः ॥ ३२ ॥
देहि दानं सुपात्रेभ्यः पुण्यं प्रकुरु साम्प्रतम्। सद्दानाज्जायते नित्यं नृणां स्वर्गादिसम्पदः ॥३३॥

यतः,

पकारेणोच्यते पापं त्रकारस्त्राणवाचकः। अक्षरद्वयसंयोगे पात्रमाहुर्मनीषिणः॥ ३४ ॥

अन्यच्च,

उत्तमपत्तं साहु मज्झमपत्तं च सावया भणिआ । अवरे वि सम्मदिट्ठी जहन्नपत्तं मुणेअव्वं ॥२५॥

अन्यच्च,

जिणभवणबिंबपुत्थय-संघसरुवेसु सत्तखित्तेसु । ववियं धणंपि बीयं सफलं होइ अणंतगुणं ॥२६॥

काष्ठादीनां जिनावासे यावन्तः परमाणवः । तावंति वर्षलक्षाणि तत्कर्ता स्वर्गभाग् भवेत् ॥२७॥

न क्वापि क्षीयते वित्तं दीयमानं कदाचन । कूपारामगवादीनां ददतामेव सम्पदः ॥ २८ ॥

यतः,

दत्तं दानं वृथा न स्यात् शृणु विक्रमभूपते । कणिकाघृतदानेन जातोऽहं श्रीपतेः सुतः ॥ २९ ॥

अन्यच्च,

पात्रे धर्मनिबन्धनं तदितरे प्रोद्यद्दयाख्यापकं,
मित्रे प्रीतिविवर्धनं रिपुजने वैरापहारक्षमम् ।

भृत्ये भक्तिभरावहं नरपतौ सन्मानसम्पादकं,

भट्टादौ च यशस्करं वितरणं न क्वाप्यहो निःफलम् ॥ ४० ॥

अतः स्वोपार्जितश्रीणां फलं लाहि विशेषतः । अद्यापि क्षीयते नैव श्रीकर्णस्य यशोभरः ॥ ४१ ॥

यतः,

श्रीवृद्धिर्नैवविच्छेद्या वर्धनीया न जातुचित् । कदाचित्स्खलिते जाते मूलतोऽपि विनश्यति ॥ ४२ ॥

भवितव्यं भवत्येव नालिकेरफलाम्बुवत् । गमितव्यं गमत्येव गजभुक्तकपित्थवत् ॥ ४३ ॥

रुद्रदत्तः पुनः प्राह भवितव्यं भवेद्यदि । पुरुषैः पुरुषाकारं न मोक्तव्यं तथा वरैः ॥ ४४ ॥

उक्तं च,

उद्यमं साहसं धैर्यं बलं बुद्धिः पराक्रमम् । षडेते यस्य विद्यन्ते तस्माद्देवोऽपि शङ्कते ॥ ४५ ॥

साधुदत्तः पुनः प्राह या भवेद्भवितव्यता । उपायैः शतसहस्रैः शक्रेणापि न चाल्यते ॥ ४६ ॥

यतः,

दैवमुल्लंघ्य यत्कार्यं क्रियते फलवन्न तत्। सरोऽम्भश्चातकेनात्तं गलरन्ध्रेण गच्छति ॥ ४७ ॥

कथामत्र शृणु भ्रातः पुरे रत्नस्थलाभिधे। रत्नसेनो महाराजा रत्नदत्तस्तदात्मजः ॥ ४८ ॥

द्वासप्ततिकलावासो रूपतर्जितनिर्जरः। कन्यां विलोकयामास पिता पुत्रार्थमेव हि ॥ ४९ ॥

यतः,

धर्मे धनागमे भोज्याऽदने सुहृज्जलागमे। पत्नी वने सुतोद्वाहे विबुधैर्न विलम्ब्यते ॥ ५० ॥

आलिख्य प्रेषितास्तेन कन्यालोकाय मंत्रिणः ॥५१॥

तद्रूपं जन्मपत्रीं च वयोलावण्ययुक् पटे। नटा इव लये भ्रष्टे विलक्षीभूय संस्थिताः ॥ ५२ ॥

जग्मुस्तके चतुर्दिक्षु लेभिरे नैव कन्यकाम्। आगताः सचिवाः सर्वे पटं संगृह्य ते करे ॥ ५३ ॥

भ्रमन्तोऽपि पुनर्गंगा–तटे चन्द्रस्थले पुरे। चतुःषष्टिकलावासा दिव्यरूपा मनोरमा ॥ ५४ ॥

भूपतिश्चन्द्रसेनोऽभू–त्तस्य चन्द्रावती सुता।

मन्त्रिभिस्तैः पटे जन्म-पत्रीं रूपं च दर्शितम् । राज्ञाहूता तदायाता पुत्री चन्द्रावती सती ॥५५

उभयोः सदृशं रूप-मालोक्य हर्षिता जनाः । पाणिग्रहणलग्नार्थ-माहूता लग्नकोविदाः ॥ ५६ ॥

लग्नविचक्षणैस्तत्र विमृश्य कथितं तयोः । आरभ्याद्यदिनाच्छ्रव्यं लग्नं सप्तदशे दिने ॥ ५७ ॥

राजोवाच वरो दूरे लग्नमासन्नमेव भोः । कथमुद्वाहसामग्रीं मेलयाम्यनयोर्द्वयोः ॥ ५८ ॥

उपायो मन्त्रिणः प्राहु-रुष्ट्रिका पवनाह्वया । असौ पञ्चदिनान्तेऽपि गमिष्यति तदन्तिके ॥५९॥

कन्यकायाः पटे रूप-मालिख्य सचिवा जवात् । आरुह्य शालिकां चेलुः पुरे रत्नस्थलाभिधे ॥६०॥

रत्नसेनस्तदालोक्य कन्यारूपमती[१]वसत् । प्राह्लादप्लावितस्वान्तो [२]बभाषे च वरं वरम् ॥ ६१ ॥

उद्वाहस्योत्सवं गेहे चक्रतुर्वरकन्ययोः । गायन्ति सधवा नार्यो गीतान्यपि पृथक् पृथक् ॥ ६२ ॥

इतः पुर्य्यपि लङ्कायां रावणो नृपतिर्महान् । अर्कचन्द्रादयो देवा येनेह कृतसेवकाः ॥ ६३ ॥

---

१ अत्यन्तश्रेष्ठम्. २ मोवाचेति इत्यपि.

अन्यदा स समासीनः सभायां सपरिच्छदः । तत्र नैमित्तिकः कश्चिद् दूरदेशात्समाययौ ॥ ६४ ॥
दशास्येन सकः पृष्टो मम मृत्युः कुतो भवेत् । सोऽपि प्राह कपिस्वामि-रामलक्ष्मणयोः शयात् ॥६५
पप्रच्छ रावणश्चेति कौ तौ मुशलिलक्ष्मणौ । पंक्ति[1]रथात्मजौ देव कोशलायां भविष्यतः ॥ ६६ ॥
भोः सचिवा वचः सत्य-मसत्यं किमिदं भवेत् । विमृश्य मन्त्रिणः प्राहु-र्नान्यथा दैवयोगतः ॥६७॥

यतः,

विहि भंजावइ विहि घडइ विहि घडीउ सहु लोइ । महिआ लोकजडफइ जं विहि करइ तं होइ ॥ ६८ ॥

सगर्वो रावणः प्राह विधाता मम किंकरः । नैमित्तिकः पुनः प्राह शृणु राजन् मयोदितम् ॥६९॥
पुरे रत्नस्थले भावी रत्नसेनात्मजस्य च । उद्वाहोऽद्यदिनादेव ध्रुवं सप्तदशे दिने ॥ ७० ॥

---

१ दशरथ इत्यपि.

तद्गृहाद्द्रोऽन्यथा भावी यदि दैवानुयोगतः। राजंस्ते मरणं नैव निश्चितं भाषितं मया ॥ ७१ ॥

यतः,

अमोघा वासरे विद्यु-दमोघं निशि गर्जितम्। अमोघा साधूनां वाणि-रमोघं ज्ञानिनो वचः ॥७२॥
विमृश्य रावणः सोऽथा-देशं ददौ पलादयोः। हर्तुं चन्द्रवतीं कन्यां पुरे चन्द्रस्थलाभिधे ॥ ७३॥
कृत्वादेशं तं तथेति जग्मतुः कन्यकागृहे। अपहृत्य सुतां ताभ्या-मर्पिता रावणस्य च ॥ ७४ ॥
रावणाकर्षिता विद्या देवीरूपं विधाय सा। आगता पर्वतप्रायं सत्वरं तस्य धामनि ॥ ७५ ॥
पेट्यां निक्षिप्य कन्यां ता-मर्पिता तत्कराम्बुजे। पेटिका रावणेनेति कथयामास तां प्रति ॥७६॥
वङ्गे संस्थाप्य तिष्ठ त्वं गंगासागरसङ्गमे। एकाग्रमनसा नित्यं सप्तदशदिनावधिः ॥ ७७ ॥
चक्रे तथेति सा देवी रावणस्यानुचारिणी। गङ्गासागरयोः सङ्गे तिष्ठति रावणाज्ञया ॥ ७८ ॥
अथ प्रोवाच पौलस्त्य-स्तक्षकं नागनायकम्। रत्नदत्तो वसत्येवं ङंगे रत्नस्थले वरे ॥ ७९ ॥

याहि त्वं तत्र तस्यापि मारणाय मयोदितम्। नैमित्तिकस्य वचनं विफलीकर्तुमञ्जसा ॥ ७० ॥

यतः,

वरं प्राणपरित्यागो न मानपरिखण्डनम्। मृतस्य क्षणिकं दुःखं मानभङ्गः पदे पदे ॥ ७१ ॥

इत्युक्ते तक्षकः सोऽपि गतो रत्नस्थले पुरे। दङ्क्ष्ं दत्त्वा तदङ्गेऽगा-त्सत्वरं रावणान्तिके ॥ ७२ ॥

आहूता मान्त्रिकाः सर्वे तत्पित्रा पुत्रमोहतः। चिकित्सास्तैः कृता बह्व्यो विषं नैव मनाक् च्युतम् ॥ ७३ ॥

भग्नजीवं विषाक्रान्तं कुमारं जनकेन तम्। मृतं ज्ञात्वाग्निना साकं संस्कारो नैव दापितः ॥७४॥

मञ्जूषायां सुतस्नेहादाज्ञा निक्षिप्य तं तदा। समर्च्य धूपपुष्पाद्यै-र्मन्दाकिन्यां प्रवाहितः ॥७५॥

भ्रमन्ती पेटिका साथ गंगासागरसंगमे। प्रेरिता क्षीरपूरेण गता दैवानुयोगतः ॥ ७६ ॥

यतः,

जणमनचिंतइ अप्पणइ मनवंछिअपूरेस । दैव भणइ रे बप्पका हुं पण अवर करेस ॥ ७७ ॥

यतः,

अर्वाग्दृष्टितया लोको यथेष्टं याचते प्रियम् । भाग्यापेक्षी विधिर्दत्ते तेन चिन्तितमन्यथा ॥७८॥
इतो देव्या हिमम्बाया विस्मृतो लाग्निको दिनः । मुखान्निष्काश्य मञ्जूषां प्रवृत्ता वनमीक्षितुम्॥
मञ्जूषायाः कुमार्याथ कर्षिता कीलिका ततः । सा पेटी हि फलीभूता कन्यका निर्गता बहिः॥८०
तदान्यां पेटिकां काञ्चि–त्तरन्तीं तीरमागताम् । सा दृष्ट्वा निम्नगातीरे तामग्रहीज्जलाद्बहिः ॥८१॥
उद्घाटिता तया पेटी विलोकनाय कौतुकात् । कामाभः [1]कुमरो दृष्टो विषमूर्छितमानसः ॥८२॥
विषछं[2] प्रगुणीकृत्य मुद्रामध्यगतं मणिम् । क्षालितो वारिणा साकं तज्जलं तस्य पायितम् ॥८३॥
गतं विषं विषार्त्तस्य चेतनाभूदचेतना । रत्नदत्तस्य सदृक्षं तद्रूपं भावितं तया ॥ ८४ ॥

---

१ कुमारवाचिकुमरशब्दोऽपि शब्दप्रभेदे.

२ विषस्य छः छेदनं यस्मादिति विषच्छं छः छेदने इत्युक्तेः विषापहारिणमिति ।

तस्मै दत्ता स्वपित्राहं कुतोऽत्रास्य च संगमः। कः पिता नगरं किं वा वृतः कुत्रापि नाम किम्॥९५

पृष्टाम्ये॰ कुमारं त–द्दिनं लग्नस्य वर्त्तते। इति ध्यात्वा कुमारः स पृष्टस्तया सलज्जया ॥ ९६ ॥

पृष्टा सा कुमरेणापि ज्ञातोदन्तः परस्परम्। गान्धर्वोद्वाहसामग्र्या पाणिग्रहं प्रचक्रतुः ॥ ९७ ॥

कुमार्याः पेटिका मध्ये प्रीत्या प्रेरितमानसौ। द्वारं दत्वा प्रविष्टौ ताऽवन्या पेटी प्रवाहिता ॥९८॥

निर्वृत्ताऽथ हिरूम्बा सा देवी वनविलोकनात्। तथैव स्थापयामास मञ्जूषां स्वमुखान्तरे॥९९॥

अष्टादशे दिने जाते व्यन्तरी रावणान्तिके। आगता पालयित्वाज्ञां मुमोच पेटिकां च ताम्॥१००

इतश्च रावणोऽवादी–द्रो ज्ञो नैमित्तिकाग्रणीः। पाणिग्रहणमजातं जातं वा वद चैतयोः ॥ १०१ ॥

नैमित्तिकः पुनः प्राह ज्ञो दशास्य मयोदितम्। वचः स्यादन्यथा नैव जातमुद्वाहकारणम्॥१०२॥

१पौलस्त्येन कनीपेटी शीघ्रमुद्घाटिता ततः। वरेण दिव्यरूपेण साकं कन्या विलोकिता ॥१०३॥

१ पौलस्त्येन रावणेन.

चमत्कृताः सभालोका दैवज्ञं संस्तुवन्ति ते । पौलस्त्योऽपि निश्चिकार्यं चकाराग्र्यं सभासदम् ॥१०४॥
रावणेनाथ सत्कृत्य विसृष्टो राक्षसैः सह । कुमारः सकलत्रोऽपि जगाम निजधामनि ॥ १०५ ॥
हर्षिताः स्वजनाः सर्वे हर्षितौ पितरौ द्वयोः । हर्षितोऽपि पुरीलोकः कुमारस्यागमे सति ॥१०६॥
अतस्त्वं देहि दानं त्वं भ्रातः पश्चानुयोगतः । भाविन्यः कर्मरेखास्ते न चलन्ति कदाचन ॥१०७॥

॥ इति रावणकथा ॥

उपक्रमी पुनः प्राह वृद्धदत्तः सहोदरम् । उपक्रमेण लक्ष्मीः स्या—च्चस्य बुद्धेः पराक्रमम् ॥ १०८ ॥

उक्तं च,

उद्यमे नास्ति दारिद्र्यं जपिते नास्ति पातकम् । मौनेन कलहो नास्ति नास्ति च जाग्रतो भयम् ॥

॥ अत्र दृष्टान्तः श्रूयते ॥

मथुरायां महीपालो राजा हरिबलाह्वयः । तस्य मन्त्री सुबुद्धिश्च सर्वबुद्धिनिधानकः ॥ ११० ॥

अथान्यदैकसमये पुत्रौ जातौ द्वयोरपि । राजपुत्रो हरिदत्तो मन्त्रिजो मतिसागरः ॥ १११ ॥
षष्ठीनिशीथसमये गतो धाता नृपालये । ललाटे राजपुत्रस्य लिखितुं लिपिकामिति ॥ ११२ ॥
रूपवान् भूपतेः सूनु-राखेटकी भविष्यति । तस्याखिले दिनेऽप्येको जीवः पाशे पतिष्यति ॥११३॥
लिखित्वा भूपपुत्रस्य ललाटे मन्त्रिणो गृहे । हंसगोऽपि लिपीकर्त्तुं तद्रात्रौ पुनरागतः ॥ ११४ ॥
मन्त्रीशजस्त्वयमेकं काष्ठभारं वहिष्यति । निर्वाह्य तद्दिनं तेन शयनं च करिष्यति ॥ ११५ ॥
निर्यातो मन्त्रिणो गेहात् लिपीकृत्य यदा विधिः । धृष्टो निजकरे धृत्वा रात्रौ प्रबुद्धमन्त्रिणा ॥११६
कस्त्वं भोः कथमायातः किं कार्यं कथयात्र भोः । अहं विधिः समायातः लिपीकर्त्तुं द्वयोस्तयोः॥
तव पुत्रस्य भूपस्य सूनोरद्य ललाटके । अक्षराणि लिखित्वाऽहं निर्यातो विधृतस्त्वया ॥ ११७ ॥
त्वया किं लिखितं चैव कथय त्वं पुराणग । यथा लिपीकृतं तेन वाचितं तत्पुरस्तथा ॥ ११९ ॥
मन्त्रीश्वरः पुनः प्राह हे विधे कथमीदृशम् । अस्मत्कुलोचितं नैव ललाटे लिखितं त्वया ॥१२०॥

हे मन्त्रीश विधिः प्राह सुमेरुः पर्वतो यदि । चालितोऽपि चलेन्मर्त्यैर्न चलेद्भवितव्यता ॥ १२१ ॥

उक्तं च,

आरोहतु गिरिशिखरं समुद्रमुल्लङ्घ्य यातु पातालम् । विधिलिखिताक्षरमालं फलति कपालं न भूपालः ॥ १२२ ॥

सुबुद्धिः प्राह भो धातो यद्भाले लिखितं त्वया । धीबलेन तथा कुर्वे यथाऽन्यथा भविष्यति ॥१२३॥

यतः,

यस्य बुद्धिर्बलं तस्य निर्बुद्धेश्च कुतो बलम् । [1]वने सिंहो मदोन्मत्तः शशकेन निपातितः ॥ १२४ ॥

---

१ कस्मिँश्चिद्वने कोऽपि सिंहो वसति स्म स च प्रतिदिनं बहून् जीवान् विनाशयति ततो मरणभयभीता वनजीवाः सिंहं प्रोचुः भो वनराज सर्वजीवविनाशमपहाय प्रतिदिनमेकैकजीवमारणे वारकं कुरु यद्दिने यस्य वारको भवति तद्दिने त्वया स एव मार्यो न त्वन्यस्तदाकर्ण्य सिंहेनापि प्रतिपन्नं तथैकदा कस्यचिच्छशकस्य वारके समागते शशकेन चिन्तितं नूनमहमद्य यमराजातिथिर्भविष्याम्यतः किञ्चिज्जीवनोपायं रचयामि यतोऽहं जीवामि सिंहस्तु म्रियेत इति

मत्प्रतिज्ञेति जानीहि करिष्ये विफलं तव । विधिः प्रोवाच १त्नो न स्या–दन्यथा लिखितं लिपौ॥
विधाता मन्त्रिणा साकं वादं कृत्वा तिरोदधे । सुष्वाप विस्मर्तुं मन्त्री तस्य दुःस्वप्नप्रवद्धचः॥१२६॥
कियत्यपि गते काले परचक्रसमागमः । अज्रूत्पुर्यां मथुरायां तेन सा वेष्टिता पुरी ॥ १२७ ॥

विचिन्त्य भोजनवेलातिक्रमे सिंहपार्श्वे शशकः समाययौ ततः सिंहेनोक्तं भो अद्य तव मदभ्यर्णसमागमने कथं महती वेला जाता तेनाप्युक्तं वनराज ममात्र शीघ्रं समागच्छतो मार्गे त्वत्सदृशोऽन्यः सिंहो मिलितस्तेनाहं रुन्धितस्तेन सह विवादोऽप्यभूत्ततः कोपारुणनेत्रेण सिंहेनोक्तं एवं तर्हि मां दर्शय इति सिंहेनोक्ते तेनाप्युक्तं तर्हि चलतु दर्शयामीत्याकर्ण्य शशकेन सह गच्छन् कस्यचित् कूपस्य पार्श्वमागतेन सिंहेनोक्तं शशक स मदीयशत्रुरपरासिंहः क्वास्ति तेनापि जले सिंहस्य प्रतिबिम्बं दर्शयता प्रोक्तं पश्यत भवद्भयान्नष्टोऽत्र कूपजले प्रविष्टं भवदरिमित्याकर्ण्य जले स्वप्रतिबिम्बं दृष्ट्वा प्रवृद्धक्रोधस्तद्वधाय निर्बुद्धिर्जले जम्पां ददौ ततः सिंहो मृतः तथैव शशकबुद्ध्या सर्वेऽप्यन्ये वनजीवा अमन्दमानन्दमवापुः शशकस्याशीर्वादं दत्वा त्वमेव सर्वजीवानामभयदानदायीत्युक्त्वा स्वस्थानं प्रापुरिति बुद्धौ शशककथा ॥

१ मे इत्यपि.

तेन सह पुरीस्वामी युद्धं कृत्वा मृतिं गतः। नृपमन्त्रिसुतौ नष्टौ गृहीतं तत्पुरं परैः ॥ १२८ ॥
भ्रमन्तौ भुवि भिक्षार्थं लक्ष्मीनगरमागतौ। व्याधालये नृपपुत्रो भृत्यो जातः क्षुधार्त्तया ॥१२९॥
आखेटकं विधाय स्वो–दरं भरति दुर्भरम्। बहुक्षुधा कृशाङ्गोऽपि संस्थितस्तत्कुटीरके ॥ १३० ॥
मन्त्रिपुत्रो वनात्काष्ठ–भारमानीय दुःखितः। दिनं दिनं प्रतिबाढं स्वनिर्वाहं करोति सः ॥१३१॥

उक्तं च,

जं चिअ विहिणा लिहिअं तं चिअ परिणमइ सयललोअस्स। इअ जाणिऊण धीरा विहुरे
वि न कायरा हुंति ॥ १३२ ॥

उदेति सविता रक्तो रक्त एवास्तमेति च। सम्पत्तौ च विपत्तौ च महतामेकरूपता ॥ १३३ ॥
इतो मन्त्री सुबुद्धिश्च भ्रमंस्तत्र समागतः। काष्ठभारं वहन् दृष्ट–श्चात्मसूनुश्चतुष्पथे ॥ १३४ ॥
किमेतत्प्राह भो पुत्र क्वावस्थाऽपि तवेदृशी। काष्ठभारं शिरोवाह्यं स्वोदरं पूरयाम्यहम् ॥ १३५ ॥

आत्मशक्त्या विचार्याथ सुबुद्धिर्बुद्धिमान् हृदि । वाग्विधेर्विफलीकर्त्तुं पुनः प्राह सुतं प्रति ॥१३६॥

चन्दनद्रुमकाष्ठानि सम्प्राप्नोषि वने यदि । आनेयानि त्वया तानि काष्ठानि नापराणि भोः॥१३७॥

वत्स त्वं यदि नाप्नोषि काष्ठभारं वनेऽखिले । तद्दिनं तत्र निर्वाह्य विधेयं लंघनं त्वया ॥ १३८ ॥

मन्त्रीश आत्मनः सूनुं संबोध्याऽप्रेषयद्वने । तद्दिने भ्रमितो बाढं न लेभे चन्दनं कुतः ॥ १३९ ॥

संतस्थौ लङ्घनं कृत्वा तद्दिने तत्र मन्त्रिजः । तद्विधिरर्पयामास तस्य चन्दनभारकम् ॥ १४० ॥

इतश्च भूभुजः पुत्रो दृग्गोचरं समागतः । मन्त्रिणाऽऽलिङ्ग्य तं बाढं भाषितः १सान्त्वभाषया॥१४१॥

कुरु त्वं वचनं नाथ ममेदं ते सुखावहम् । आखेटके करी पाशे पतत्येव यदा तदा ॥ १४२ ॥

बन्धनीयस्त्वया तत्र नान्यो जीवः कदाचन । मन्त्रिणेति प्रतिबोध्याऽऽखेटकार्थं विसर्जितः॥१४३॥

राज्ञः सूनुर्यदा नैव गृह्णाति हस्तिनं विना । स्वप्रतिज्ञाविधानाय विधिना चार्पितो गजः ॥१४४॥

१ सान्त्वं नाम कर्णमनसोरानन्दकारकं वाक्यं भाषा वा ।

कियत्यपि गते काले राजसूनोः सहस्रशः । गजा जाता मन्त्रिजस्य मिलिताः स्वर्णकोटयः॥१४५

उक्तं च,

आपदो महतामेव महतामेव सम्पदः । हीयते वर्द्धते चन्द्रो न तु तारागणः क्वचित् ॥ १४६ ॥

निर्जित्य वैरिणं युद्धे राजसूर्वरदन्तिभिः । स्वराज्यं पालयामास पैत्रीयं मन्त्रिणा सह ॥ १४७ ॥

सुबुद्धिर्मन्त्रिणा धातु-र्लिपिर्यथान्यथा कृता । ज्ञातस्तथोद्यमं कुर्वे रक्षणार्थं धनस्य मे ॥ १४८ ॥

यतः,

उद्योगिनं पुरुषसिंहमुपैति लक्ष्मी-र्दैवं तु दैवमिति कापुरुषा वदन्ति ।
दैवं निहत्य कुरु पौरुषमात्मशक्त्या यत्ने कृते यदि न सिद्ध्यति कोऽत्र दोषः ॥ १४९ ॥

साधुदत्तोपदेशेन यदा वृद्धो न बोधितः । साधुदत्तस्तदा, तत्र मौनमाधाय तस्थिवान् ॥ १५० ॥

अन्नाणह उवएसका निप्फलं हुंति न भंति । पाणी घणु विलोइअ करचोपका न हुंति ॥ १५१ ॥

अन्यच्च,

शक्यो वारयितुं जलेन हुतभुक् छत्रेण सूर्यातपो नागेन्द्रो निशितांकुशेन समदं दण्डेन गोगर्दभौ
व्याधिर्भेषजसङ्ग्रहैश्च विविधैर्मन्त्रप्रयोगैर्विषं । सर्वस्यौषधमस्ति शास्त्रविहितं मूर्खस्य ना-
स्त्यौषधम् ॥ १५२ ॥

न टिट्टिभो गच्छति हंसलीलया न वायसो जल्पति कोकिलारवम् ।
यवाः प्रकीर्णा न भवन्ति शालयः तथैव नीचः प्रकृतिं न मुञ्चति ॥ १५३ ॥

॥ इति श्रीसुबुद्धिमन्त्रिकथा ॥

अथोष्ट्राश्वकरभादि–क्रयाणं बहुधा कुधीः । मेलयित्वाऽचलद् डंगे श्रेष्ठी कांपिल्यकाभिधे ॥१५४॥
पप्रच्छ नगरीलोकान् प्राप्तस्त्रिविक्रमालयम् । अभ्युत्थानादिशुश्रूषा कृता तद्व्यवहारिणा ॥ १५५ ॥
सुकृतार्था वयं जाता दर्शनात्तव साम्प्रतम् । इति स्वविनयं कृत्वा रक्षितो निजमन्दिरे ॥ १५६ ॥

यतः,

एह्यागच्छ समाविशासनमिदं प्रीतोऽस्मि ते दर्शनात्
का वार्ता पुरि दुर्बलोऽसि च कथं कस्माच्चिराद् दृश्यसे ।
इत्येवं गृहमागतं प्रणयिनं ये जापयन्त्यादरा–
त्तेषां युक्तमसङ्कितेन मनसा गन्तुं गृहे सर्वदा ॥ १५७ ॥

वृद्धदत्तस्ततस्तीव्रं चिंतयामास चेतसि । इष्टं वैद्योपदिष्टं मे श्रेष्ठिना रक्षितो यदि ॥ १५८ ॥
तत्रैवासननैपथ्य–भोजनाभरणादिकम् । ददौ तत्पुत्रपौत्राणां दासीनां च विशेषतः ॥ १५९ ॥

यतः,

बाला राचइ सुखडी तरुणी फूलतंबोल । अधवडी राचइ कापडे गरढां गिरुइ बोल ॥ १६० ॥
वर्ण्यवस्तुप्रदानेन तत्कुटुम्बं वशीकृतम् । द्वयोरपि दृढा मैत्री जाता तत्र परस्परम् ॥ १६१ ॥

यतः,

कार्यस्यैव करो नित्य–मक्ष्णोरिव च पक्ष्मणी। कुर्यादेव विचारेण मित्रं मित्रस्य लक्षणम् ॥१६२॥

कियत्यपि गते काले गन्तुकामः स्वपत्तनम्। त्रिविक्रमं समापृच्छ्य प्रस्थितः सपरिच्छदः ॥ १६३ ॥

। त्रिविक्रमोऽप्याह ।

मा गा इत्यपमङ्गलं व्रज सखे स्नेहेन हीनं वच–
स्तिष्ठेति प्रभुता यथारुचि कुरु त्वं साप्युदासीनता।
तत्किं साम्प्रतमाचरामि भवतस्तत्सोपकारं वचः
स्मर्त्तव्या वयमादरेण भवता यावत्पुनर्दर्शनम् ॥ १६४ ॥

। वृद्धदत्तः प्राह ।

न स्मर्त्तव्यस्त्वया मित्र पुनस्त्वां न स्मराम्यहम्। स्मरणं चेतसां वृत्ति-स्तत्त्वया सह वर्त्तते॥१६५

। त्रिविक्रमः प्राह ।

यूयं स्वं नगरं गृहान्तरमिव प्राप्तुं प्रयाणोन्मुखा
वर्त्तध्वेऽश्वरथोष्ट्रगोषु रुचिरं यद्भूरिरत्नेषु वा ।
उत्कृष्टानि च यानि भूषणकृते वस्त्रेषु वान्यत्तथा
यत्किञ्चित्कतिचिद्दिनस्मरणकृद् गृह्णीत मत्तुष्टये ॥ १६६ ॥

यतः,

ददाति प्रतिगृह्णाति गुह्यमाख्याति पृच्छति । भुङ्क्ते भोजयते चैव षड्विधं प्रीतिलक्षणम् ॥ १६७ ॥
सखे यन्मद्गृहे सर्वं तत्ते तुष्ट्यर्थमेव हि । भवतां यदि निर्बन्ध-स्तदा किं याचयाम्यहम् ॥१६८॥
असौ विचक्षणा दासी चित्तज्ञा पुष्पवत्यपि । पाकस्नानक्रियाकर्म-निपुणा मे प्रदीयताम् ॥१६९॥
स्वकं पुरं गते पश्चा-त्स्नेहेया भवता मम । इत्युक्त्वा दासिका तस्मै दत्ता पुष्पवती तदा ॥ १७०॥

तया सह रथारूढश्चचाल स्वपुरं प्रति । प्राप्तः १पुष्पकरण्डिन्या पार्श्वे तावदचिन्तयत् ॥ १७१ ॥
असौ पुष्पवती दासी मारणीया मयेत्यपि । अस्याः कुक्षौ भवत्येव प्रोक्ता नरो धनस्य मे ॥१७२॥
पाककर्मेच्छया सार्था-त्पश्चाद्भूय मुधा कुधीः । रथादाहृत्य पादेनाऽपातयत्तामिलातले ॥ १७३ ॥
मुखश्वासं निरुंध्याऽथ पुष्पवतीं जघान सः । ततो राजभयाद्भीतः शीघ्रं सार्थे समागतः ॥ १७४ ॥
दासी शरीरचिन्तार्थं मे गता नैव दृश्यते । सार्थस्य कथितं तेन हाहाकारोऽभवत्तदा ॥ १७५ ॥
लेखं त्रिविक्रमस्यापि लेखयित्वा तथैव च । ज्ञापितं श्रेष्ठिनो दासी गता नष्टा मृताथवा ॥१७६॥
शोचयामास चित्ते स श्रुत्वा वार्तां त्रिविक्रमः । वृद्धदत्तो निजामित्र-विनाशान्मुदितो हृदि ॥१७७॥

यतः,

क्षुद्राः स्वल्पाय कार्याय महतां व्यसनैषिणः । मक्षिकाणामभावाय कुष्ठी सूर्यास्तमीहते ॥१७८॥

१ पुष्करण्डिन्यामुज्जयिनीपुर्याम् ।

प्राच्यपुण्योदयाज्जीव-न्निस्ससारोदराच्छिशुः । तस्या दास्या गतो जीवः पापिना कर्म किं कृतम् ॥

उक्तं च,

वने रणे शत्रुजलाग्निमध्ये महार्णवे पर्वतमस्तके वा । सुप्तं प्रमत्तं विषमस्थितं वा रक्षन्ति
पुण्यानि पुराकृतानि ॥ १७० ॥

दीर्घमायुः परं रूप-मारोग्यं श्लाघनीयता । अहिंसायाः फलं सर्वं किमन्यत्कामदैव सा ॥ १७१॥

अत्रान्तरे विशालायां काचिद् वृद्धा निवासिनी । आगता तत्र जीवन्तं दृष्ट्वा बालं ललौ करे॥१७२

यतः,

पात्रं न तापयति नापि मलं प्रसूते स्नेहं न संहरति नो हि गुणं क्षिणोति ।
दोषावसानसमये रुचिमादधाति दीपाधिको भवति सद्मनि बालकः सन् ॥ १७३ ॥

अन्यच्च,

सत्त्वाधिको भवति किं बहुभिः प्रसूतैः ।
एकोऽपि यः सकलकार्यविधौ समर्थः सत्त्वाधिको भवति किं बहुभिः प्रसूतैः ।
चन्द्रः प्रकाशयति दिङ्मुखमण्डलानि तारागणः समुदितोऽपि निरर्थ एव ॥ १७४ ॥
बालस्य रूपमालोक्याऽचिन्तयत्सेति चेतसि। अस्य व्यापादिता माता केन चाण्डालकर्मणा॥१७५॥
भूषणानि ततो दास्या निबध्य निजशाटके। पश्चाद्गता विशालायां हस्तन्यस्तस्तनन्धया ॥१७६॥
वृत्तान्तं राजसमक्षं निखिलं सा न्यवेदयत्। राजाह पुत्रवद्बालः पालनीयस्त्वयाप्यसौ ॥ १७७ ॥
तद्दास्या अग्निसंस्कारः कारितो भूभुजा ततः। वृद्धया सोत्सवं कृत्वा नीतः [1]शावो निजे गृहे ॥
समक्षं वृद्धया राज्ञश्चम्पकं नाम तत्कृतम्। लब्धोऽयं बालकस्तस्माच्चम्पकस्य तरोस्तले ॥१७८॥
सोत्सवं लेखशालायां विमुक्तः पठनाय सः। द्वासप्ततिकलावासो जातः स्तोकैर्दिनैरपि ॥१७९॥
सम्पूर्णापि धर्मकला जाता तस्य विशेषतः। सर्वकलामृगाक्षीणां ललाटे तिलकोपमा ॥ १८१ ॥

१ शावो बालकः ।

यतः,

सकलापि कला कलावतां विफला धर्मकलां विना किल । निखिलावयवा यथा वृथा तनुजा-
जामकनीनिका इव ॥ १९२ ॥

अन्यदा चम्पकेनापि निर्जिताः सर्वलेखकाः । सञ्जायमानसंवादे सन्नायां सपरिछदाः ॥ १९३ ॥

यतः,

न हि भवति निर्विगोपक-मनुपासितगुरुकुलस्य विज्ञानम् । प्रकटितपश्चाद्भागं पश्यति
नृत्यं मयूरेण ॥ १९४ ॥

अन्यच्च,

अव्याकरणमधीतं भिन्नद्रोण्या तरङ्गिणीतरणम् । औषधमपथ्यकरणं त्रयमपि करणं वृथा
करणम् ॥ १९५ ॥

स मत्सरेण १तैर्दत्त-मभिधानमपैतृकम् । तत्स्वं मन्दिरमागत्य किञ्चिद्दूनो जगाद सः ॥ १९६ ॥
हे अम्बे मे पितुर्नाम कथय त्वं किमञ्जसा । वृद्धया कथितं सर्वं तत्स्वरूपं यथास्थितम् ॥१९७॥
अनुक्रमेण तद्देहे सञ्जातनवयौवनम् । उपार्जिता दिनैः स्वल्पैर्द्विसप्तस्वर्णकोटयः ॥ १९८ ॥
आवर्जिता गुणैस्तस्य निखिला व्यवहारिणः । अमन्दानन्दसन्दोहा-स्तेपि स्वजनतामगुः ॥१९९॥

यतः,

गुणाः सर्वत्र पूज्यन्ते दूरेऽपि वसतां सताम् । केतकीगन्धमाघ्राय स्वयं गच्छन्ति षट्पदाः ॥२००॥
उपकर्त्तुं प्रियं वक्तुं कर्त्तुं स्नेहमकृत्रिमम् । सज्जनानां स्वभावोऽयं केनाऽपि दुर्निवार्यते ॥ २०१ ॥
अथान्यदा सुहृत्कोऽपि चम्पकश्रेष्ठिना सह । स्वपुत्रजन्ययात्रायां कस्मिँश्चिद्ग्रामके ययौ ॥२०२॥
तत्र कन्यापितुर्मित्रो वृद्धदत्तः समागतः । रूपं दृष्ट्वा चम्पकस्य विस्मितो निजचेतसि ॥ २०३ ॥

१ तैः विद्यार्थिभिः ।

अहो रूपमहो रूपं कोऽयं देवकुमारकः । इति वितर्किते तेन जाता काव्यादिगोष्ठिका ॥ २०४ ॥

यतः,

भोज्यं गेयं सुवचनं ताम्बूलं कामिनी कथा । विशेषज्ञा विशेषज्ञः सर्वसाधारणं सुखम् ॥ २०५ ॥

सौभाग्यं तस्य चातुर्यं रूपं गुणसमन्वितम् । दृष्ट्वा तन्नामकं पृष्ट्वा दध्यावेवंविधं हृदि ॥ २०६ ॥

यतः,

गुणं पृच्छसि मा रूपं शीलं पृच्छसि मा कुलम् । बुद्धिं पृच्छसि मा विद्यां भोगं पृच्छसि मा धनम् ॥२०७

कुमारोऽसौ [1]मनोजाभो मत्पुत्र्याः स्याद्वरो यदि । तदा द्विसफलं जन्म जायते जगतीतले ॥२०८॥

यतः,

जिहां परिमल तिहां तुच्छ दल जिहां दल तिहां नवि गंध । रे चम्पक तुह तिन्नि गुण सुदल-
सुरूपसुगंध ॥ २०९ ॥

१ मनोजः-कामदेवस्तद्वदाभा कान्तिर्यस्य कामदेवसदृश इत्यर्थः ।

एवं सौभाग्यचातुर्य्य-रूपलावण्यसम्भवाः । सम्पूर्णाः सद्गुणाः सन्ति चम्पकश्रेष्ठिनस्तनौ ॥२१०॥
पृच्छाम्यहं निजवंश-कुलस्थानादिकं वरम् । इति ध्यात्वा गतः पार्श्वे पप्रच्छ चम्पकं च तम् ॥२११॥
वृत्तं पूर्वं श्रुतं पार्श्वे वृद्धाया निखिलं निजम् । सर्वं तत्कथितं तस्य चम्पकेन छलं विना ॥ २१२ ॥

यतः,

सरलगतिः सरलमतिः सरलाकारस्तु शीलसम्पन्नः । सरलं पश्यति सरलः तत्सन्मुख-
स्थितं पुरुषम् ॥ २१३ ॥

तद्वचो वज्रघाताभं जातं तस्यात्मकर्णयोः । १स्वांते वितर्कयामास दासीपुत्रो भवेदसौ ॥ २१४ ॥

यतः,

दूरतया स्थूलतया श्यामतया गन्धलोलुपैर्मधुपैः । धावितमिभराजधिया तत्त्वधिया चाग्रतो
महिषः ॥ २१५ ॥

१ स्वान्ते मनसि ।

आतंकव्याकुलत्वेन मया दासी विनाशिता। हाहा जातं वृथाशेषं लक्ष्मीज्ञोक्ता न मारितः॥२१६॥
अधुनापि सुसाध्योऽसौ चम्पापार्श्वे समागतः। प्रभूतं मित्रसम्पत्त्या दुःसाध्यो जायते पुनः॥२१७

यतः,

वैरं विश्वानरो व्याधि-वादव्यसनलक्षणाः। महानर्थाय जायन्ते वकाराः पञ्च वर्द्धिताः॥ २१८॥
चिन्तयामि मतिः काचि-न्मद्वैरिमारणाय च। विश्वे बुद्धिबलेनापि न्मव्यं सञ्जायते नृणाम् ॥२१९

यतः,

बलथी बुद्धिज आगली जो उपजइ ततकाल। १वानरसिंह विगोविया एणइ एकलइ सीआल ॥२२०

---

१ अस्ति भीमनामारण्ये कुरंटाह्वः शृगालः, कुरंटाभिधा च तस्य पत्न्येकदा तं गर्भिणी सत्यवादीत्, हे स्वामिन्नहं गर्भिण्यस्मि, तेन प्रसूतये स्थानं विलोकय सोऽभणद्विलोकयन्नस्मि, अथैकदा सा स्वपतिना सहारण्ये भ्रमन्ती व्याघ्रगुहान्तिके प्राप्ता सा पतिं प्राह हे स्वामिन्नागतप्रसवसमयाहमतः पदमपि गन्तुं न शक्नोमि, सोऽवददस्यां गुहायां प्रसवं कुरु तया च तथैव विहिते शृगालस्तामशिक्षयत्, हे कुरंटे मन्नाम रणभञ्जनेति वाच्यं, त्वन्नाम चारिवज्राभि-

अस्य मांतुर्विहत्या मे लग्नास्त्येनं विहन्म्यहम्। यथा कर्दमसन्दोहे मिलति कर्दमः पुनः ॥२२१॥

रिति वक्ष्ये व्याघ्रे चागते त्वया शिशू रुदितौ कार्यौ रोदननिदानं च मयि पृच्छति क्षुधितौ स्त इति वदेः इति तामनु-
शास्य स बहिःस्थः पुच्छाच्छोटनेन पाटितभूपीठं व्याघ्रमायान्तमालोक्य कुरंटामवदत्, हे अरिवज्राग्रे कथं रुदतः शि-
शुकौ सा स्माह हे रणभञ्जन ! बालकौ क्षुधितौ स्तः, स प्राह तर्हि मौनं कारय समागच्छन् भावी व्याघ्रः, तत्पिशिते-
नैनावर्भकौ तोषयिष्यामीति श्रुत्वा व्याघ्रो दध्यौ यदसौ कोऽपि महान् श्वापदो ज्ञायते, यतोऽनयोरभिधे अपि दुस्सहे,
ततो नास्त्यनया गुहया कृत्यमिति मत्वा स द्रुतं पश्चाद्ववले, सर्वमप्येतद्व्यतिकरं विलोक्यैकः कपिस्तरोरुत्तीर्य पृष्ठतो गत्वा
व्याघ्रमूचे हे शार्दूल ! मा याहि ? पश्चाद्वलस्व ! नासौ कोऽप्यन्यः श्वापदः किंत्वेतौ शृगालौ दम्पती स्तः, अनेन धूर्त-
शृगालेन धिया त्वं वञ्चितोऽसि, व्याघ्रो व्याजहार, नाहमेष्यामि, भवानपि कोऽपि तदीयोऽनुचरोऽस्ति तेन मां मार-
यित्वा त्वं प्रणश्य यास्यसि, तदा कपिः प्रोचे तर्ह्यावयोः कण्ठावेकेन पाशेन नियंत्र्य तत्र गमिष्यावः, शार्दूलेनापि त-
त्प्रतिपन्नं ततश्चैकेन पाशेन कीलितगलौ तावायान्तौ विलोक्य शृगालो दध्यौ, नूनं दुष्टमच्चेष्टितेन दुरात्मना कपिनाय-
मानीत इति विचार्य तथैव कुरंटां प्राह, तथापि तथैवोक्ते सोऽवदन् मौनं विधेहि ! प्राणप्रियो मम मित्रं कपिः व्याघ्र-
मादायाधुनैवागच्छन् भविष्यतीति श्रुत्वा शार्दूलो जीवग्राहं प्रणष्टः, तद्गलकीलितः कपिरपि कण्टकजालान्तर्भग्नवपुर-

ध्यात्वेति चम्पकं प्राह तिष्ठ वत्स मदन्तिके । स्वल्पैरेव दिनैः स्वर्ण-कोटिलाभो भविष्यति ॥२२२
पश्चान्निजपुरं गच्छेश्चम्पायां याहि साम्प्रतम् । वस्तूनि स्वल्पमूल्यानि मञ्जिष्ठादीनि मद्गृहे॥२२३॥
भवन्तीह महर्घाणि मद्भार्या दास्यतीति ते । उभयोरेव लाभार्थ-मत्रार्थे दक्षिणः करः ॥ २२४ ॥
पञ्चाशत्स्वर्णलक्षाणां लाभो भावी ध्रुवः पृथक् । तथेति शपथं कृत्वा भुक्तावुद्वाहमण्डपे ॥२२५॥
अथायं लेखहस्ताख्यो मारणीयस्त्वया प्रिये । प्रेष्यमाणोऽस्त्युपायेन मया वैरी त्वदन्तिके॥२२६॥
हत्वा प्रच्छन्नमेवैनं सन्निक्षेप्यान्धकूपके । मम ज्ञाप्यं जनेनापि साभिज्ञानेन केनचित् ॥ २२७ ॥
इति लेखं लिखित्वाऽथ मुद्रयित्वा च दुर्धिया । चम्पकस्य कराम्भोजे तेन लेखः समर्पितः॥२२८॥
सोत्सवं स्वर्णलाभाय चम्पापुर्यां गतस्ततः । सौधं पप्रच्छ तत्रैव साधुदत्तस्य चम्पकः ॥ २२९ ॥

---

सुखास्पदं जज्ञे ततः स कुरंटोऽपि निष्कण्टकत्वेन तस्यामेव गुहायां बालकौ प्रपाल्य स्वाश्रयमाससाद ॥ इति मतिविषये शृगालकथा ॥

केनचिन्मनुजेनापि दर्शितं तन्निकेतनम् । गत्वा तत्रार्पितो लेखः श्रेष्ठिपुत्रीकराम्बुजे ॥ २३० ॥
उन्मुद्य वाचितो लेख-स्तया चतुरया स्यात् । ज्ञात्वा १तत्सङ्गतोदन्तं दध्यावेवं ततो हृदि ॥२३१॥
कलावान् गुणवांश्चैव साधुसौभाग्यमन्दिरम् । अहो २मारापितो दिव्य-रूपः कुमार ईदृशः ॥२३२॥
किं प्रारब्धमिदं पित्रा दुष्टचाण्डालकर्मणा । ईदृक्पत्रीं पितुर्दृष्ट्वा मन्माताऽमुं हनिष्यति ॥२३३॥

यतः,

यद्यप्यनेकगुणरत्नभृता धरित्री यो येन रञ्जितमनाः सुखितः स तेन ।
यस्यात्मनो भवति निम्बफलेऽभिलाषः कर्पूरसारशकलेन स किं करोति ॥ २३४ ॥

अयं चेन्मम भर्त्ता स्या-त्सौभाग्यवांस्तदा वरम् । गालयामास तं लेख-मिति ध्यात्वा तिलोत्तमा ॥२३५॥
सन्मान्य लेखहस्ताख्यं बहिरास्थानमण्डपे । निवेशितस्तया तत्र ३कन्या मधुरया गिरा ॥२३६॥

१ तल्लेखगतं वृत्तान्तं. २ मारित इति भवेत्. ३ कन्या कन्यया कनी शब्दस्य रूपं ।

ततः परोऽभिनवीनो लेखोऽपि लिखितस्तया । स्वताताक्षरसदृक्षः शीघ्रं तत्रैव मुद्रितः ॥ २३७ ॥
पूर्वं कार्याय कस्मैचि-द्गता सा श्रेष्ठिगेहिनी । तदागतात्मनो गेहे पुत्र्या मातुः समर्पितः ॥२३८॥
उन्मुद्य स्वामिनो लेखं स्फुटं वाचयतीति सा । अस्मै देया कुमाराय चम्पकाय तिलोत्तमा॥२३९
अत्रार्थे नैव विलम्ब-स्त्वया कार्योऽपि धीसखे । सदैव त्वं वचो मे स्या-त्पालनाय समुद्यता॥२४०॥
यतः,
दाने ध्याने ऋणच्छेदे मनोहरवरागमे । विद्याग्राहे सुतोद्वाहे विलम्बो न विधीयते ॥ २४१ ॥
आहूय स्वजनं सर्वं तत्समक्षं तया पुनः । तल्लेखसङ्गतोदन्तो गाढस्वरेण वाचितः ॥ २४२ ॥
सम्पिण्डीभूय ते सर्व-साधुदत्तादयो जनाः । रूपं विलोकयामासु-स्तस्य सौभाग्यमन्दिरम्॥२४३॥
वरं वरं तदा कृत्वा सर्वैस्तैः स्वजनादिभिः । चम्पकाय कुमाराय कन्या दत्ता तिलोत्तमा ॥२४४॥
साधुदत्तादयो हृष्टा हर्षिता सा तिलोत्तमा॥ आहूतो गणकस्तत्र सर्व[1]कार्तान्तिकाग्रणीः ॥२४५॥

---

[1] कार्तान्तिकाग्रणीः नैमित्तिकाग्रणीः

ज्योतिःशास्त्राणि सर्वाणि विलोक्य कथितं ततः । शुद्धमद्यैव संध्यायां लग्नं निर्दोषमस्त्यपि ॥२४६॥
द्वादशाब्दकमध्येऽपि लग्नं तल्लग्नसन्निभम् । एवं विधं भवेन्नैव विलोक्य कथितं मया ॥ २४७ ॥
चिन्तितं साधुदत्तेन मद्धात्रायं तु प्रेषितः । अद्यैव ज्ञापितं मेऽस्याः शीघ्रमुद्वाहकारणम् ॥ २४८ ॥
प्रौढोत्सवेन तल्लग्ने साधुदत्तादिभिर्मुदा । वरेण्यं [1]कारितं पाणि-ग्रहणं वरकन्ययोः ॥ २४९ ॥
ततः समागतान्येव बहुवर्द्धापनानि च । उद्वाहकारणं सिद्धं तयोर्निर्विघ्नतोऽखिलम् ॥ २५० ॥

यतः,

कामिनी कुंकुमकेवडुं कज्जल कूर कपूर । कोमल कप्पड कविअरस पुण्यह ए अंकूर ॥ २५१ ॥
हर्षिता नगरीलोकाः सङ्गमे वरकन्ययोः । हर्षितं तत्कुटुम्बं च वृद्धदत्तं विना पुनः ॥ २५२ ॥

यतः,

---

[1] विहितमित्यपि

दोषमेव समाधत्ते न गुणं विगुणो जनः । जलौकास्तनुसंशक्तं रक्तं पिबति नामृतम् ॥ २५३ ॥
चम्पागतेन केनाथ नरेण कथितं ततः । वृद्धदत्तस्य निश्शेषं पुत्र्या उद्वाहकारणम् ॥ २५४ ॥
समाकर्ण्य वचस्तस्यो-त्पन्नं शूलं स्वमस्तके । लज्जमानो रतिं नैव शीघ्रं धाम्नि जगाम सः ॥२५५॥
खेती वाडी विनती मीलहकेरी खाजि । आप तुरंगम जोमीइं तु पांचे आवे काजि ॥ २५६ ॥
यावद्दृष्टं गृहं तेन संकुलं स्वजनैः सह । सञ्जातो हृदये दाहो द्विगुणस्तस्य तावता ॥ २५७ ॥

उक्तं च,

अन्यथा चिन्तितं कार्यं दैवेन कृतमन्यथा । वर्षन्ति जलदाः शैले जलमन्यत्र गच्छति ॥ २५८ ॥
ततो गृहागतं प्राह साधुदत्तस्सहोदरम् । आहूय स्वजनं भ्रात-स्तवेप्सितं कृतं मया ॥ २५९ ॥
भृशं खिन्नोऽथ चित्ते स यथा क्षारलवो व्रणे । भ्रातरं स्वजनोपेतं वीक्ष्योवाच वरं कृतम् ॥२६०॥

यतः,

अर्थनाशं मनस्तापं गृहे दुश्चरितानि च । वञ्चनं चापमानोऽपि मतिमान्नो प्रकाशयेत् ॥ २६१ ॥
अन्यदा निर्वृतोद्वाहे साधुदत्तमुवाच सः । विचारणां विना कार्यं भ्रातस्कृतमिदं त्वया ॥ २६२ ॥
सोऽप्याह न विजानेऽहं लेखोऽयं लिखितस्त्वया । आत्मनो लेखमालोक्य निनिन्दात्मानमेव हि ॥

यतः,

अघटितघटितानि घटयति सुघटितघटितानि जर्जरीकुरुते । विधिरेव तानि घटयति यानि पुमान्नैव चिन्तयति ॥ २६४ ॥

अन्यच्च,

कृतकर्मक्षयो नास्ति कल्पकोटिशतैरपि । अवश्यमेव भोक्तव्यं कृतं कर्मशुभाशुभम् ॥ २६५ ॥
जणमनचिंतइ अप्पणइ मनवंछिअ पुरेसि । दैव भणइ रे बप्पका हुं पणि अवरकरेसि ॥ २६६ ॥
चम्पकश्रेष्ठिनोऽशेषो मित्रवर्गोऽचलत्ततः । वृद्धेनात्याग्रहं कृत्वा जामातृकोऽपि रक्षितः ॥ २६७ ॥

दृष्ट्वाप्यहं पितुःकन्या तस्थिवान् वृद्धवेश्मनि । स्वगुणैः रञ्जयामास निखिलान्नगरीजनान् ॥ २६८॥

यतः,

गृह्यते गुणिभिर्वित्त-मपि सङ्कटचेतसाम् । अन्धकूपात्पयः पात्रैः सुगुणैः किं न गृह्यते ॥ २६९ ॥
विद्वत्वं च नृपत्वं च नैव तुल्यं कदाचन । स्वदेशे पूज्यते राजा विद्वान् सर्वत्र पूज्यते ॥ २७० ॥
अथैकदा तमस्विन्या-मुत्तरन्ती तिलोत्तमा । तृतीयभूमितो भूमौ द्वितीयेऽपि शनैः शनैः ॥ २७१ ॥
क्रियमाणं मिथो मन्त्रं पितृभ्यां प्राक् तदात्मनः । कर्णं दत्वा स्थितैकान्ते शुश्रावेति तिलोत्तमा ॥
अयं प्रिये [1]सपत्नो मे जामाताऽशुद्धवंशजः । अनुक्रमेण [2]संस्त्याय-स्वामी भाव्यसुतस्य मे॥२७३
तदा नास्मत्कुले भव्यं जायते त्वं विचारय । इति हेतोर्विषं देयं त्वयास्य पानभोजने ॥ २७४ ॥
पुत्रीमोहो मनाक् चित्ते नानेतव्यस्त्वया प्रिये । पुत्रीवर्गेण केनापि कुलं कस्य न रक्षितम्॥२७५॥

---

१ सपत्नः शत्रुः २ गृहस्वामी

यतः,

आज्ञां छादतीति जाजरी बेटी धनभोजनबाजरी । गर भेद असती नु नेह वहिलुं देव देखा-
वे ठेह ॥ २७६ ॥

अथवा,

पुत्रीमोहो विधेयो न ऋणबन्धे भवेदसौ । लात्वा लक्ष्यं निजं पश्चा-द्यागच्छत्यन्यमन्दिरे ॥ २७७ ॥
एवं तस्य वचः श्रुत्वा कौतुदेव्या तथेत्यपि । अङ्गीकृतं तमादेशं निजभर्त्तुः स्त्रिया तया ॥ २७८ ॥

यतः,

स्वामिनः सेवकः श्रेणी स्वच्छायेव शरीरिणाम् । कार्य्याकार्यविचार्येषु प्रिया पत्यनुवर्तिनी ॥२७९॥
श्रुत्वा तद्वचनं सर्वं वज्राहतेव दुःखिता । सापि दध्यौ निजस्वान्ते द्विधा मे विषमागतिः॥२८०॥

यतः,

अइगलइ सरूइ पिट्टं नहु गलइ गलंति दो नयणा । दोवि विसमाइ कज्जाइ अहिणा-छच्छुंदरी गहिआ ॥ २७१ ॥

यद्येवं ज्ञाप्यते भर्तुः पिता तेनापि मार्यते । अन्यथा तु मृतिर्भर्तु-रितो व्याघ्र इतस्तटी ॥ २७२ ॥
इति ध्यात्वा गता शीघ्रं पुनस्तृतीयभूतले । अथोत्पन्नप्रतिभा सा पतिं प्राहेति वल्लभा ॥ २७३ ॥
अद्य स्वामिन्मया दृष्टं कुस्वप्नं भवदन्तकृत् । यत्नं मासद्वयं यावद्भवताऽतो विधीयते ॥ २७४ ॥
पितृगृहे न भोक्तव्यं ताम्बूलं तु जनार्पितम् । नापि पेयं पयः पान-मत्रार्थे नियमस्तव ॥ २७५ ॥

यतः,

विमानतापि कर्त्तव्या परस्यायतिसुन्दरा । कर्णेषु क्षिप्यते क्षारः कीटोपद्रवरक्षणे ॥ २७६ ॥
हृद्यमित्रगृहे कार्यं भवद्भिर्भोजनादिकम् । धीधनैर्धार्यते किं न किञ्चित्स्त्रीणां वचो हितम् ॥२७७॥

यतः,

निषिद्धमप्याचरणीयमापदि क्रीया सती नावति यत्र सर्वथा ।
घनाम्बुना राजपथे सपिछले क्वचिद्बुधैरप्यपथेन गम्यते ॥ २७८ ॥

श्रेयस्करं हितं पथ्य-मभिधार्य वचो हृदि । चम्पकेन स्वभार्यायाः तद्वच्यं मानितं मुदा ॥२७९॥

ततः शेते सकालं स तृतीयभूमिकातले । सूर्योदये बहिर्याति गृहात्परिवृतो नरैः ॥ २९० ॥

स विश्वासमपि कस्य न करोति कदाचन । सदैव हृद्यमित्रेण साकं तिष्ठति निर्भयम् ॥ २९१ ॥

यतः,

सज्जन ते सज्जन सही जुरूसइ स ठवार । अंब न होवे अक्करु जे जाति सहकार ॥ २९२ ॥

अन्यदा वृद्धदत्तोऽथ स्वभार्यामाह हे प्रिये । किमिदं शीतलत्वं ते प्रत्यादेशे भवत्यपि ॥२९३॥

भर्तारं प्राह सा स्वामिन् किं करोमि क्षणं विना। तिष्ठत्यसौ बहिर्भुङ्क्ते सभ्रद्सुभटावृतः॥२९४॥

पिबति नैव पानीयं ताम्बूलं तु कदापि न । आस्वादति सदा शेते तृतीयभूमिकातले ॥ २९५ ॥

यच्चिन्त्यतेऽनर्थकरं परस्य तस्यैव गेहे पतति ध्रुवं तत् । आख्यानकं सत्यमिदं बभूव वृद्धो मृतो जीवति चम्पकोऽयम् ॥ ३२८ ॥

तं विनाश्यात्मनस्तेऽपि बहिः कूपजलेन तु । रुधिराक्तवपुः शस्त्र-शोज्ज्ञां ततो विचिक्षिपुः ॥३२९॥

कृतकृत्यमिवात्मानं मन्यमाना गता गृहे । पुनः सूर्योदये जाते तत्रागच्छन्ति घातुकाः ॥ ३३० ॥

समुपलक्ष्य निर्जीवं श्रेष्ठिनं स्वामिनं निजम् । रुरुदुर्बाढशब्देन तत्पुरः पापकारिणः ॥ ३३१ ॥

यतः,

किं करोति नरः प्राज्ञो मूर्खो वाप्यथ पण्डितः । दैवो यस्य छलान्वेषी करोति विफलां क्रियाम्॥३३२

वृद्धप्रभूतशोकार्त्तः श्रेष्ठिज्ञातातिवल्लभः । साधुदत्तोऽपि हृदाहे मृतस्तत्र विधेर्वशात् ॥ ३३३ ॥

ततस्तयोर्मृत्युकर्मक्रियायाः करणान्तरे । चम्पकः स्वजनैः सर्वैः कृतस्तद्गृहनायकः ॥ ३३४ ॥

यतः,

मृत्युः शरीरगोप्तारं रक्षितारं धराधनम्। दुश्चारिणीव हसति पितरं पुत्रवत्सलम् ॥ ३३५ ॥

अथवा

कृपण केइ धनमेलवे विलसी जाइ वयल्ल। तरलतुरंगमजववरे हलखेडी मरे बयल्ल ॥ ३३६ ॥

चतुर्दशस्वर्णकोटीः विशालापुरतः स्वकाः। आनाप्य १मालिनीपुर्यां भुङ्क्ते सप्त सुखानि च॥३३७॥

यतः,

पेलुं सुख जे दीलइ नरा बीजु सुख जे रणविणवरा
त्रीजुं सुख जे वसीये गाम चउथुं सुख जे न जइ गाम।
पांचमुं सुख जे निज धन साथे छठुं सुख जे महिला हाथे
उज्जलचित्तसुकोमलसुख एतले हुआ साते सुख ॥ ३३८ ॥

१ मालिनीपुर्यां चम्पापुर्याम्।

अन्यच्च,

चन्दनं घनुरहारं चामरं चीरचन्द्रमाः। चम्पकं चतुरा नारी ग्रीष्मे सप्त सुखावहाः ॥ ३३९ ॥

पटम्बरः पयः पानं पट्टकं प्रौढमन्दिरम्। पुराणं पद्मनेत्रा[1] च [2]रक्षयां सप्त सुखावहाः ॥ ३४० ॥

तैलं तापनस्ताम्बूलं तूलिका तप्तभोजनम्। तप्तवारि तरुणी तु शीते सप्त सुखावहाः ॥ ३४१ ॥

यतः,

सकलमंजुलमंगलमालिका वितनुते सदने शुभसम्पदः। हरति विघ्नततिः कुरुते शिवं तनुमतां जिनधर्मसुरद्रुमः ॥ ३४२ ॥

अबन्धूनामसौ बन्धु-रसखीनामसौ सखा। अनाथानामसौ नाथो धर्मो विश्वैकवत्सलः ॥३४३॥

कालान्तरेऽथ सञ्जातो नायको व्यवहारिणाम्। पूर्वपुण्योदयात्सोऽपि समभूत्संपदान्वितः ॥३४४॥

---

१ परमं चित्तमित्यपि। २ शय्यामित्यपि।

निधाने षण्णवतयो बभूवुः स्वर्णकोटयः । व्याजान्तरे व्यवसाये तज्जाताः स्वर्णकोटयः ॥ ३४५ ॥
सहस्रं यानपात्राणि तथैव शकटानि च । सप्तभूमिगृहावासाः भाण्डशालापणानि च ॥ ३४६ ॥
गजाश्वाः पञ्चशतशः सुभटाः पार्श्ववर्त्तिनः । अन्येऽपि सुभटाः पञ्चा·शत्सहस्राणि सन्ति च॥३४७
उष्ट्रा लक्षं पुनस्तस्य बलीवर्दास्तथैव च । अन्येऽपि दशलक्षाः स्युर्वृषाश्च पृष्ठिवाहकाः ॥ ३४८॥
गोकुलानां शतमेकं पुनस्तस्य निकेतने । १सौवांगदशसहस्र-सेवका व्यवहारिणः ॥ ३४९ ॥
तस्याङ्गभोगे भवति प्रत्यहं लक्षमेव हि । करुणानामनाथानां दशलक्षा दिने दिने ॥ ३५० ॥
स जैनमुनिसंसर्गा-त्परोऽभूच्छ्रावकाग्रणीः । कारिता एकसहस्रं प्रासादाः परमार्हताम् ॥३५१॥
प्रवालस्वर्णपाषाण-रत्नरूप्यादिभिः पुनः । अर्हतां प्रतिमास्तेन निर्मापिता·श्च लक्षशः ॥ ३५२ ॥
एवं तु भोगसामग्रीं देवानामपि दुर्लभाम् । भुञ्जानः स्वगृहावासे धन्यस्तिष्ठति धर्मधीः ॥३५३॥

१ स्वस्येदं सौवं ।

यतः,

इक्षोर्विकारा मतयः कवीनां गवां रसो बालकचेष्टितानि । ताम्बूलमन्नं तरुणीकटाक्ष एता-
न्यहो सन्ति न शक्रनाके ॥ ३५४ ॥

उक्तं च,

झिन्नाण रवो तुरिआण हिंसणो मग्गणजणाणकरप्पसरो । गुईरविलोअणसद्दो धन्नाण घरे
समुच्छलइ ॥ ३५५ ॥

अन्यदा केवलज्ञानी श्रीगुरुः समवासरत् । वन्दनार्थं गता लोका-स्तत्रोद्यानेऽपि भूरिशः ॥३५६॥
अवन्दत समागत्य चम्पकः सपरिच्छदः । ततः केवलिना तत्र वितेने धर्मदेशना ॥ ३५७ ॥

यतः,

दानं सुपात्रे विशदं सुशीलं तपो विचित्रं शुभभावना च । भवार्णवोत्तारणयानपात्रं धर्मं चतु-
र्धा जिनपा वदन्ति ॥ ३५८ ॥

राज्यं सुसम्पदो भोगाः कुले जन्म सुरूपता । पाण्डित्यमायुरारोग्यं धर्मस्यैतत्फलं विदुः ॥३५९॥

धणमिव चिंतइ धम्मं जीविअमिव जोवयाइं रखेइ । सुरतरुमिव सुगुरुपयं आराहइ सो लहइ सिद्धी ॥ ३६० ॥

इत्यादिका श्रुता धर्म-देशना तैश्च तद्गुरोः । उत्पन्नसंशयः पश्चाद्-गुरुं पप्रच्छ चम्पकः ॥ ३६१ ॥

यतः,

श्रुत्वा धर्मं विजानाति श्रुत्वा त्यजति दुर्मतिम् । श्रुत्वा ज्ञानमवाप्नोति श्रुत्वा मोक्षं च गच्छति ॥

भगवन् किं मया पूर्वभवेऽपि सुकृतं कृतम् । येनेदृशी भवेऽमुष्मिन् सञ्जाता सम्पदा मम ॥३६३॥

वृद्धदत्तेन किं पापं कृतं स्वपूर्वजन्मनि । निर्गमिता अपि येन षण्णवतिस्वर्णकोटयः ॥ ३६४ ॥

पूज्यस्थाने वधोपाय उत्पन्नः केन कर्मणा । श्वशुरस्य मयि केन कर्मणा जीवितोऽस्म्यहम् ॥३६५॥

अज्ञातकुलजातस्य मे वृद्धा मिलिता कथम् । मयि निरपराधेऽपि श्रेष्ठिनो वैरकारणम् ॥ ३६६ ॥

यतः,

सव्वो पुव्वकयाणं कम्माणं पावए फलविवागाइं । अवराहे सुगुणेसुअ निमित्तमित्तं परो होइ॥३६७

गुरुः प्रोवाच भो भद्र निजं पूर्वभवं शृणु । सुमेलकाभिधाना पूस्तदासन्ने तपोवने ॥ ३६८ ॥

अभूतां तापसौ वृद्धौ कन्दमूलाशिनौ युगौ । भवदत्तभवभूती नामानौ तापसाग्रिमौ ॥ ३६९ ॥

पञ्चवह्निस्नानधूमः पानादिदुस्तपं तपः । एकाग्रमनसावेव सन्तप्य तौ दिने दिने ॥ ३७० ॥

आद्यः कुटिलकश्चैव द्वितीयः सरलः सदा । उभयकरणी चैका मनोभावाः पृथक् पृथक् ॥ ३७१॥

यतः,

एकोदरसमुत्पन्ना एकनक्षत्रजातकाः । न भवन्ति समा शीला यथा बदरिकण्टकाः ॥ ३७२ ॥

दम्भभावेन सद्धर्मो विहितो विफलीभवेत् । शुद्धचित्तैः शुभो धर्मः सेवितः फलदोऽखिलः॥३७३

यतः,

धम्मंमि नत्थि माया न य कवडं आणुअत्ति भणिअं च। फुडपागडमकुडिलं-धम्मवयणमुज्जुअं
जाणह ॥ ३७४ ॥

भवदत्तभवभूती तापसौ तौ तपोवने। तपस्तीव्रं तप्यमानौ मृत्वा यक्षौ बभूवतुः ॥ ३७५ ॥
ततश्च्युत्वा बलमति-रन्यायपुरपत्तने। बभूवेभ्यकुले श्रेष्ठी नामेति वञ्चनामतिः ॥ ३७६ ॥
भवभूतिः समुत्पन्नो निष्कपटो विचक्षणः। महासेनाभिधानोऽपि क्षत्रियः पाटलीपुरे ॥ ३७७ ॥
दानशीलो धनाधीशः प्रकृत्या सरलः सदा। सम्बभूव सज्जनानां मान्यो मध्ये महर्द्धिकः ॥३७८॥
अन्यदा तीर्थयात्रीय-मादाय द्रव्यमुत्तमम्। अनुक्रमेण सम्प्राप्तो-ऽन्यायपुरनिवेशने ॥ ३७९ ॥
श्रेष्ठी तत्र पुरे पूर्वं वसति वञ्चनामतिः। तद्गृहे पञ्चरत्नानि विमुच्य भद्रभावतः ॥ ३८० ॥
क्वापि तीर्थे गतः सोऽपि श्रेष्ठिना चिन्तितं हृदि। तत्पञ्चलक्षमूल्यानि दृष्ट्वा लोभं गतस्ततः ॥३८१

यतः,

कोहो पिइ पणासेइ माणो विणयनासणो । माया मित्ताण नासेइ लोहो सवविणासणो ॥ ३७२ ॥
बेतन्नेतवसणं आयासकाले संन्नयविवागो अ । मरणं धम्मप्रंसो अरइ अन्नाउ सवाइ ॥ ३७३ ॥
रत्नमेकं लक्षमूल्यं कस्यापि व्यवहारिणः । महणकं गृहे मुक्त्वा प्रौढावासमकारयत् ॥ ३७४ ॥
शेषरत्नचतुष्कं तु गुप्तस्थानेऽप्यगोपयत् । तीर्थयात्रामितः कृत्वा महासेनः समागतः ॥ ३७५ ॥
शीघ्रं गत्वा महासेनो रत्नन्यासीकृतो गृहे । लक्षमूल्यानि रत्नानि पश्चान्निजान्ययाचयत् ॥३७६॥
श्रेष्ठी प्रोवाच कस्त्वं न्नोः कदायातोऽत्र कोऽप्यहम् । अन्यत्रान्त्या न्नवानत्रा-गतोऽन्यत्र गवेषय ॥
वयं कस्यापि न कुर्मो न्यासापहरणं बलम् । पुनर्न्नवादृशां तोर्थ-यात्रार्थिनां विशेषतः ॥ ३७७ ॥

यतः,

कन्यागोन्नूम्यलोकानि न्यासापहरणं तथा । कूटसाक्षं च पञ्चेति स्थूलासत्यान्यकीर्त्तयन् ॥३७८॥

अन्यच्च,

अपलपति गुह्यं दत्तं प्रत्ययदत्ते च संशयं कुरुते। क्रयविक्रये च लुंटति तथापि लोके वणिक् साधुः
मानेन किञ्चित्कलया च किञ्चिद् बुद्ध्या च किञ्चित्तुलया च किञ्चित्।
लेखेन किञ्चिच्च समाहरन्ति प्रत्यक्षचौरा वणिजो भवन्ति ॥ ३९१ ॥
विभवो वीतसङ्गानां वैदग्ध्यं कुलयोषिताम्। दाक्षिण्यं वणिजां प्रेम-वेश्यानाममृतं विषम् ॥३९२॥
वयं तु नैव जानीमो बलं बलं कलं तुलम्। येषां मतिर्व्यवहारे याति ते व्यवहारिणः ॥ ३९३ ॥
ईदृशेन वचनेन लज्जा भवति सन्नृणाम्। इति हेतोर्निगच्छ त्व-मन्यत्स्थानं विलोकय ॥ ३९४ ॥
महासेनो विलक्षोऽभू-दाकर्ण्य श्रेष्ठिनो वचः। राजद्वारे ततो गत्वा कञ्चित्पप्रच्छ मानवम् ॥३९५॥
भो भद्र कोऽत्र राजास्ति को मन्त्री कः पुरोहितः। कः श्रेष्ठी तापसः को वा कस्तलारस्तु शौल्विकः ॥ ३९६ ॥
स प्राह निर्विचारोऽत्र राजा मन्त्री कुशीलकः। पुरोहितः शिलापातः श्रेष्ठी च वञ्चनामतिः ॥

तापसोऽज्ञानराशिश्च तलारः सर्वलुंटकः । वसति शौण्डिकोऽन्यायी वेश्या कपटकूञ्चिका ॥३९८

इति श्रुत्वा वचस्तस्य महासेनो व्यचिन्तयत् । अहो गतानि रत्नानि मेऽत्रार्थे संशयो न हि ॥३९९

अत्रान्तरे वशा काचि-न्मुक्तकेशा रुदन्त्यगात् । क्षोणिभुजः सभायां तु महासेनोऽन्वगात्तदा ॥४००

रोदिषीति कथं राज्ञा पृष्टे कात्यायनी जगौ । राजन्नहं परास्कन्दिमाता वसामि ते पुरे ॥ ४०१ ॥

केनापि कलहं नैव करोमि वैरकारणम् । मौनं विधाय तिष्ठामि गृहे यामि न कस्यचित् ॥४०२॥

निराधारा नराधीश देवदत्तनिकेतने । खात्रं दातुं गतः पुत्रो ममाद्य रजनीमुखे ॥ ४०३ ॥

स्रष्टा तदुपरिभित्ते-र्जर्जरत्वाद् गृहस्य च । ततो मे तनयो मृत्यु-माप स्वामिन् च साम्प्रतम् ॥४०४॥

यतः,

मदेकपुत्रो जननी जरातुरा नवप्रसूतिर्वरटा तपस्विनी ।
गतिस्तयोरेकजनस्तमर्दय-न्नहो विधे त्वां करुणां रुणद्धि नः ॥ ४०५ ॥

राजन्नहं निराधारा वृद्धा पुत्रवियोगिनी । कः करिष्यति मे चिन्तां भोजनाच्छादनादिकाम् ॥४०६॥
इति प्रोच्य जराजीर्णा गाढस्वरेण रोदिता । चिन्तां मा कुरु राजाह करिष्याम्यधुना पुनः ॥४०७॥
निश्चिंता भव भो वृद्धे सन्मान्येति विसर्जिता । देवदत्तः समाहूतः महेभ्यो धरणीभुजा ॥४०८॥
हंहो त्वया वासभित्ति-र्जर्जरी कारिता कथम् । स जगौ नैव जानेऽहं जानाति सूत्रधारकः ॥ ४०९
येन तत्सूत्रधारस्य पूर्णद्रव्यं मयार्पितम् । सूत्रधारः समाहूतः सोप्याह दूषणं न मे ॥ ४१० ॥
एकाग्रमनसा स्वामिन् भित्तिकाचयनाय च । संस्थितोऽहं यदा तावत् श्रेष्ठिपुत्री समागता॥४११
विहितस्फारशोभाङ्गा नवयौवनमाश्रिता । सङ्गता तत्र मे दृष्टि-स्तद्भवेत्सिथिलेष्टिका ॥ ४१२ ॥
भूपेनाकारिता देव-दत्तपुत्री पुनस्तदा । साऽवोचन्न विजानेऽहं जानाति तापसो ध्रुवम् ॥ ४१३ ॥
स्वामिन्नग्नपरिव्राट् ते सन्मार्गे तिष्ठति व्रती । तद्दर्शनह्रियोन्मार्गे गताहं तन्न दूषणम् ॥ ४१४ ॥
संन्यासिकः समाहूतः सोऽभणद् भूपते तव । जामाताऽश्वं समारुह्याऽशिक्षयन्मङ्गलां गतिम् ॥

तेनाहं स्खलितस्तत्र न दोष इति मे स्फुटम् । जामाताकारितस्तेन सोप्याह दूषणं विधेः ॥४१६॥
बुद्धिरुत्पातिता येन धात्रा तत्कर्मकारिणा । ततो मन्त्रीश्वरं प्राह भवताकार्यते विधिः ॥ ४१७ ॥
येनाहमेवमन्यायं न क्षमामि कदाचन । मन्त्री प्राह सापराधः स्रष्टा नष्टो भवद्भयात् ॥ ४१८ ॥
भूभुजाऽऽकार्ये दैवज्ञो जल्पितो लप्स्यते विधिः । विलोक्य शुद्धलग्नेन वद त्वं निर्णयं मम ॥४१९॥
इत्युक्त्वा भोजनाय स्वं क्ष्मापः समगात्ततः । इति श्रुत्वा वचस्तेषां महासेनो व्यचिन्तयत्॥४२०
ज्ञातोऽहो भूभुजां धर्मो रत्नान्येव गतानि मे । प्राणानामत्र सन्देहो भावी पूत्करणेन किम् ॥ ४२१
वेश्यागृहे ततो गत्वा ज्ञापितो निखिलो निजः । वृत्तान्तः पञ्चरत्नानां महासेनेन तीर्थिना ॥४२२॥
वेश्यया कथितं तस्य सञ्जातकृपया तया । असमाधिर्विधेया न त्वया काचिन्मनागपि ॥ ४२३ ॥
वेश्याहं कपटकूश्री जानीहि त्वं विशेषतः । वालयिष्यामि रत्नानि निजबुद्धिबलेन ते ॥ ४२४ ॥

यतः,

वरं बुद्धिर्न सा विद्या विद्यातो बुद्धिरुत्तमा । बुद्धिहीना विनश्यन्ति यथा ते १सिंहकारकाः ॥४२५॥

१ पृथिवीभूषणे पुरे गदाधरश्रीधरगंगाधरलक्ष्मीधरकमलाधरनामानो द्विजन्मानो मिथः प्रकामं प्रीतिभाजः पंच सुहृद आसन्, तेषु चत्वारोऽधीतशास्त्रा अपि विमतयः, पंचमस्तु कमलाधराभिधोऽनधीतशास्त्रः, परं मतिमान् । एकदा ते पंचापि संभूय परदेशे प्रस्थिताः, क्रमेण महतीमरण्यानीं प्राप्ताः परस्परमिति जगुः वयं चत्वारः पण्डिताः, अयं तु मूर्खस्तेन कनकादिलाभेऽपि नास्य भाग इति निश्चित्य पुरतो गच्छन्तस्ते कापि प्रदेशे स्वयं मृतस्य सिंहस्य कलेवरं विलोक्य स्वस्वविद्यामाहात्म्यविलोकनार्थमिति प्रोचुः । तदा चादिमः स्माह । मृतस्यास्य सिंहस्येमान्यस्थीनि यथास्थानं निवेशयामीति मम शक्तिः, ततो द्वितीयोऽवोचत्, तथाविधस्य सिंहस्य चर्म सूत्रयामीति मम शक्तिः, ततस्तृतीयः स्माह तादृशस्य सिंहस्य मांसरुधिरादिधातून् विदधामीति मम शक्तिः, ततश्चतुर्थः प्रोचिवान् अहमेनं सिंहं संजीवयामीति मम शक्तिः । इत्यभिधाय पठितवालिशैस्तैस्त्रिभिः स्वस्वोक्ते कृते सति स्वोक्तं कर्तुमुद्यतं पठितमूर्खं चतुर्थं विलोक्य मतिमान् पंचमः प्राह, हे सुहृदो मृतमेनं पञ्चाननं मा संजीवयत ! किं चासौ जीवितो नास्माकं शिवकर इत्यात्ममित्रोक्तमकुर्वंस्तु तेषु मतिमन्मुख्यः स निकटवर्त्तिनमेकं तरुमारुरोह । ततः संजीवितः स केशरी तान् विनाश्य वने विजहार कमलाधरोऽपि ततः समुत्तीर्य देशान्तरे स्वमतिरंजितेभ्यो राजादिभ्यो धनं प्राप्य क्षेमेणागारमागमत् ॥ इति मतिविषये कमलाधरविप्रकथा ॥

स्वगृहात्साररत्नानि मञ्जूषायां बहून्यपि । निक्षिप्य सा सखीयुक्ता चचाल श्रेष्ठिनो गृहे ॥४२६॥
श्रेष्ठिनं प्राह हे श्रेष्ठिन् वसंतनगरे मम । अस्ति कण्ठगतप्राणा रोगार्त्ता भगिनी भृशम् ॥४२७॥
मिलनार्थमहं तस्या गच्छामि तावके गृहे । तावदेतानि रत्नानि रक्षणीयानि मे त्वया ॥ ४२८ ॥
पुण्यवान् परचित्तज्ञः श्रद्धालुः करुणापरः । निर्लोभी व्यवहारी त्व-मिति हेतोर्गृहाण भोः ॥४२९॥
कदाचिन्मृत्युमापन्ना स्वसा मत्प्राणवल्लभा । अग्नावहं प्रविक्षामि तस्या मोहान्महामते ॥४३०॥
एतत्सर्वं सुधर्मेऽपि व्ययितव्यं तदा त्वया । इति श्रुत्वा वचस्तस्या हृष्टः श्रेष्ठी निजो१च्चले ॥४३१
इतश्च कृतसंकेतो महासेनः समागतः । याचयामास रत्नानि निजानि श्रेष्ठिसन्निधौ ॥ ४३२ ॥
ददौ रत्नचतुष्कं च बहुद्रव्याभिलिप्सया । ज्ञापनाय स्वशुद्धत्वं गणिकायाः पुरः पुनः ॥ ४३३ ॥
याचितं पञ्चमं रत्नं तत्पार्श्वे तेन तीर्थिना । गृहं ग्रहणके मुक्त्वा पञ्चमं रत्नमर्पितम् ॥ ४३४ ॥

---

१ निजमनसि ।

इतः संकेतिता दासी काचित्तत्र समागमत्। वेश्यां वर्धापयामास मातस्ते जीविता स्वसा॥४३५॥
अन्नूनिरामया सापि तद्वृत्तान्तः समागतः। संप्रोच्येत्यगमच्चेटी कुत्रचित्कर्मकारिणी ॥ ४३६ ॥
नृत्यं चकार वेश्या तन्महासेनस्ततः पुनः। तत्रैव विस्मितः श्रेष्ठी नर्तितो वञ्चनामतिः ॥ ४३७ ॥
त्रयोऽपि नर्तितुं लग्ना मिलिताः पूर्जना घनाः। केनचिद्गणिका पृष्टा नर्तनं क्रियते कथम् ॥४३८॥
स्वस्वसुर्जीवनात्साह नृत्यामि गणिकाप्यहम्। महासेनस्ततः पृष्टः नृत्यामि रत्नलाभतः ॥४३९॥
पुनः प्रोवाच हे श्रेष्ठिन् कथं त्वं नृत्यसि भृशम्। श्रेष्ठी प्रोवाच भो भद्र मयका वञ्चितं जगत् ॥
परं केनाप्यहं नैव वञ्चितो वञ्चनामतिः। अनया वञ्चितो बाढ-मिति नृत्यामि साम्प्रतम् ॥४४१॥
गतानि पञ्चरत्नानि गतं मत्प्रौढमन्दिरम्। पश्चादेतानि रत्नानि गृहीतानि गणिकया ॥ ४४२ ॥

यतः,

धुत्तपणो लो जाणिइं जइ वंचिजइ पाप। अवरलोकजे वंचिइं सो वंचिज्जइ आप ॥ ४४३ ॥

हस्यमानो जनैः सर्वै-र्महादुःखी ततोऽभवत् । वैराग्याद्धश्वकश्रेष्टी प्रपेदे तापसव्रतम् ॥ ४४४ ॥
निजे पुरे महासेनो निर्विघ्नतः समागमत् । पञ्चरत्नप्रसादेन सुखी जातः स निर्भरम् ॥ ४४५ ॥

यतः,

मृदुत्वचेतसा लोका न तु काठिन्यचेतसाम् । खरांशुः सेवकैर्हीनः शीतांशुः सेवकान्वितः॥४४६॥
अथान्यदा तत्र देशे जातं द्वादशवार्षिकम् । दुर्भिक्षं क्षुधया लोका म्रियन्ते स्म निकेतने ॥४४७॥
केऽपि देशान्तरं याताः केऽपि तत्रैव संस्थिताः । क्षुधार्त्ताः केऽपि दृश्यंते कणं क्वापि न लभ्यते ॥
विक्रीयन्ते क्षुधार्त्तिभिः पितृभिस्तनयादयः । स्थाने स्थाने विलोक्यंते १करंकानि बहून्यपि॥४४९॥

यतः,

पश्यतामुदयमीयते रविः पश्यतां च पुनरस्तमीयते । सम्पदां च विपदां च संगमे स्तोकमन्त-

---

१ करंकानि कमंडलूनि नालिकेरफलादिनिर्मितानि पात्राणि वा ।

रमिदं वदन्निव ॥ ४५० ॥

एवंविधं तु समयं स मत्वेति महामतिः । महासेनो महीपीठे सत्राकारमकारयत् ॥ ४५१ ॥

यतः,

अभिमुखागतमार्गणधोरणी-ध्वनितपल्लवितांबरगह्वरे । वितरणे वरणे च समुद्यते भवति कोऽपि पुमान् विरलः पुनः ॥ ४५२ ॥

दीनानुकम्पया दान-श्रद्धया सर्वतो दिशम् । पटहोद्घोषणं तत्र कारितं तेन धीमता ॥ ४५३ ॥

यतः,

क्षत्रूणां हयशस्त्रबंदिषु भवेद्द्रव्यव्ययः प्रायशो
भूमध्ये कृपणात्मनां व्यसनिनां स्त्रीद्यूतचौर्योद्यमे ।
शृंगारे पणयोषितां स वणिजां पण्ये कृषौ क्षेत्रिणां

पापानां मधुमांसयोः सुकृतिनां धर्मोपचारोत्सवे ॥ ४५४ ॥

सत्राकारे स दीनानां ग्लानरंकक्षुधार्त्तिनाम् । महासेनोऽकरोच्चिन्ता-मन्निमानविवर्जितः ॥४५५॥

यतः,

दुक्खे धम्मपरिक्खा सुहडपरिक्खा होइ संगामे । वसणे मित्तपरिक्खा दानपरिक्खा होइ दुक्काले ॥

एका वृद्धा तदा काचिन्निराधारा क्षुधार्त्तया । १जातन्यक्षांगशोकत्वा-त्सत्राकारे समागमत् ॥४५७॥

निजे गृहे समानीय कारिता तत्प्रतिक्रिया । कृपारसनिमग्नेन वर्यवैद्यस्य सन्निधौ ४५८ ॥

ततो निरामया जाता सा वृद्धा सुखभागिनी । त्वन्नार्य्या गुणसुन्दर्य्या तद्दानमनुमोदितम् ॥४५९॥

महासेनस्ततो मृत्वा त्वं जातश्चम्पकाभिधः । गुणसुन्दर्यभूद्देहे तव भार्या तिलोत्तमा ॥ ४६० ॥

या वृद्धा पालिता यत्र सत्राकारे पुनस्त्वया । सा मृत्वा स्थविरी जाता कष्टात्त्वं रक्षितो यया॥४६१

---

१ न्यक्षं सर्वम् ।

यतः,

जातिस्मराणि नेत्राणि जानन्ति प्रियमप्रियम् । अप्रिये संकुचेद्दृष्टिः प्रिये याति विकस्वरम् ॥४६२

तापसव्रतमाराध्य धनीशो वञ्चनामतिः । वृद्धदत्तोऽभूत् पुनः षण्णवतिस्वर्णकोटिभाक् ॥ ४६३ ॥

पूर्वे भवे पञ्चरत्ना-पहारादिह विष्टपे । षण्णवति स्वर्णकोटी-स्तेनोपार्ज्य तवार्पिताः ॥ ४६४ ॥

यतः,

वहमारणअब्भक्खाण-दाणपरधणविलोवणाईणं । सव्वजहन्नो उदओ दसगुणिओ इक्कसिकयाणं ॥४६५

तिव्वयरे पओसे सयगुणिओ सयसहस्सकोडिगुणो । कोडाकोडिगुणो वा हुज्ज विवागो बहुतरो वा ॥

पूर्वे भवे त्वया यस्य श्रेष्ठिनो वञ्चनामतेः । कृतः पराभवस्तेन जातं चिरं तवोपरि ॥ ४६७ ॥

त्वया कुलमदः पश्चा-न्महासेनभवे कृतः । दास्यास्त्रिविक्रमेऽन्यस्य जातस्तेन त्वमात्मजः ॥४६८॥

इति पूर्वभवं श्रुत्वा चम्पको जातसंवरः । दीक्षां लात्वा स्वभार्यायुक् संजगाम सुरालयम् ॥४६९॥

तत्पादपद्मपरिमल-सेवी श्रीधर्म[1]सिंहगणिनामा । तत्पादपङ्कजसेवी जयविमलगणिर्गणे जीयात् ॥
श्रीआम्रस्थलचातुर्मासि मध्यस्थप्रीतिविमलेन । शशिरसबाणाग्न्यब्दे (१६५३) विहिताः श्लो-
काश्चरित्रस्य ॥ ४७७ ॥

इति श्रीमत्तपागणगगनांगणदिनमणिभट्टारकभट्टारकभट्टारकश्रीआनन्दविमलसू-
रिशिष्यश्रीहर्षविमलगणिशिष्यपण्डितजयविमलगणिपादपद्मसेविपण्डित-
प्रीतिविमलगणिविरचिता श्रीचम्पकश्रेष्ठिकथा सम्पूर्णा ॥



[1] श्रीहर्षविमलगणिरित्यपरनामधारी ।

यतः,

नरयगइ गमणपडिहत्थएकेण तह प्पएसिणा रण्णा । अमरविमाणं पत्तं तं आयरिअप्पभावेण॥

अन्यच्च,

शिरसि सुमनःसंगा-द्धार्यन्ते तंतवोऽपि हि । ते तु पादेन मृज्यंते पटेषु मलसङ्गताः ॥ ४७१ ॥
गुणवर्जनसंसर्गो याति स्वल्पोऽपि गौरवम् । पुष्पमालानुसङ्गेन सूत्रं शिरसि धार्यते ॥ ४७२ ॥
महाविदेहक्षेत्रेषु समुत्पद्य ततः पुनः । तज्जीवो व्रतमादाय मोक्षगामी भवेत्ततः ॥ ४७३ ॥

आर्या च,

तपगछमानसे यः सूरिः श्रीहीरविजयसूरिः । शुक्लद्विपक्षचारी राजितो राजहंस इव ॥ ४७४ ॥
तत्पट्टधारिधीरः सूरिः श्रीविजयसेनसूर्यभिधः । स जयतु जीवलोकेऽपि यावन्मेरुर्भवेदचलः ॥४७५

